# गाथारत्नसमुच्चय

महाराजासंस्कृतकालेजसाहित्यप्रधानाध्यापकेन
साहित्याचार्यभट्टश्रीमथुरानाथशास्त्रिणा

स्वसंग्रथित—
संस्कृतगाथासप्तशतीतः
समुच्चितः

'जयपुरप्रेमप्रकाशयन्त्रालये'
मुद्राप्य प्रकाशितः

सन् १६५९ } —❀❀❀— { मू० रूप्यकत्रयम्

# PREFACE.

So conservative and narrow we have been in our study of Sanskrit Kavyas that our choice is limited down to about a dozen principal kavyas and the result is that other kavyas even of the highest merit are allowed to fade out of the picture. Specially towards the rich treasure of Pali and Prakrit literature our attitude has been that of a culpable apathy. But for the devoted labours of the Western Savants, the literary gems of Pali and Prakrit should have been lost to the world beyond recovery. It is high time that we should turn to this neglected branch of our literature. I therefore heartily appreciate the efforts of Pt. Mathura Nath Shastri who first brought out a good edition of the *Gathasaptashati*, the great Prakrit anthology of Hala with a Sanskrit rendering in metrical form of the original Prakrit verses and a new commentary on the same by himself.

Now for the benefit of our University and college Students he has just taken out a selection of 133 stanzas from the *Gathasaptashati* I am sure that it will fulfil a very useful purpose and meet a longfelt demand. A word of apology, however, may not be out of place here to justify the principal position given to sanskrit rendering of the gathas which in their original prakrit form appear only in foot notes. To anyone who is acquainted with the condition of our University Studies, the practicability of this arrangement will atonce, be evident. The study of Pali & Prakrit has no place in our University courses of studies or if it has, in some cases, as an optional subject, it only serves a decorative purpose for the University Calendar. As it is, the interest in Pali and Prakrit literature can be created through a Sanskrit link only and hence the importance of Sanskrit rendering.

The Agra University Board of studies in Sanskrit has already recommended this selection for the rapid reading in the B. A. classes, and I hope it will have a place in the Curriculum of the other Universities as well.

Every stanza in the selection contains some striking original idea which will captivate the imagination of the reader and would make his study of Sanskrit full of interest and relish, which, otherwise sometimes, becomes insipid owing to the boring repetition of the same old hackneyed ideas.

'*Chamatkara*' (चमत्कार) is the essential merit of the gathas collected in the Saptashati, and more particularly of the stanzas included in this selection I fail to find a suitable English synonym for the Sanskrit word 'चमत्कार' Synonyms given in Sanskrit-English Dictionaries such as 'Astonishment' or 'Surprise' are misleading, at least when this word is used in Rhetorics. English word 'Wit' may be the nearest approach to the sense of चमत्कार which means an aesthetic quality that charms and captivates the Intellect. We find some kind of चमत्कार in every stanza of this selection. When Pandit Mathuranath Shastri asked me to go through his selection and sent me his Ms, I happened to glance at the stanza* which means:— "Noticing the wife's face touched with hand soiled with soot of the Kitchen, the husband remarked that the face really resembled the moon in that condition" I wrote to the Pandit that the joy of this one stanza alone had more than requited for all the labour of going through his Ms.

In conclusion I want only to express my appreciation of the contribution of Pt. Mathura Nath Shastri towards

the study of Sanskrit & Prakrit in form of Sanskrit rendering of the *Gathasaptashati* and the present selection from the same, and hope that both of these will fulfil their object.

**Dharmendra Nath Shastri**
*Professor, Meerut College*
*Convener, Sanskrit Board of*
**Studies, Agra University.**

*Meerut.*
*17 Oct. 1935.*



* गेहिन्या माहानसकर्ममसीमलिनितेन हस्तेन ।
स्पृष्टं मुखमुपहसति हि चन्द्रावस्थां गतं दयितः ॥

# FOREWORD

**TO**

**The main Edition**



The following pages embody the text of "Sanskrit Gatha Saptashati" with a new commentary, entitled "Vyangya Sarvankasha" in Sanskrit by Bhatta Mathura Nath Shastri of Jaipur. The text of the work is a free Sanskrit rendering, in metrical form of the original Prakrit verses attributed to the great royal poet Hala or Satvahana of the Andhra dynasty. The present edition comprises the Prakrit Gathas of Hala, a literal Sanskrit translation, a free metrical version in Sanskrit and a new Sanskrit commentary.

The GathaSaptashati is an anthology in Maharashtri Prakrit of above 700 erotic verses in the Arya metre and occupies a unique place, as a lyrical poem, in the History of Sanskrit Poetry. The compilation was made by King Hala and contains a number of verses of his own, but the greater portion of the work represents the labour of other lyrical poets of the age, the names of some having been mentioned ( with doubtful accuracy in several cases ) in subsequent commentaries. Almost all the verses however are equally sweet, graceful, fresh, and vivid.

The popularity of the work may be inferred from the fact of its having been widely commented upon. So far as our present knowledge goes there were no less than eighteen commentaries on the work, some of which were really good and useful. The present commentary by Pandit Mathura Nath is an addition to this number, but a wel-come addition.'Coming from the pen of a scholar, who is himself a poet of great eminence, it is naturally free as much from the rigidity as from the looseness and slip-shod character which we have come to associate with the ordinary commentaries on poetical works in Sanskrit. Written in an elegant and flowing styel it has tried to keep in view, when interpreting the text, the requirements of artistic and asthetical sense. And it may be hoped that this will be found to be greatly helpful in the appreciation of the poetical flavour of the original verses.

Government Sanskrit College, BENARES.

Sd. GOPI NATH KAVIRAJ, *M. A.*
*Principal.*

॥ श्रीः ॥

# प्राक्कथनम्

हालोपनामकसातवाहनसंकलिता गाथासप्तशती भारतीयसाहित्ये प्रधानं स्थानमधिकरोति। न केवलं प्राकृत-काव्येष्वेव, विश्वविश्रुतेषु संस्कृत-काव्येष्वपि एतत्तुलनायाः काव्यं नाद्यावधि केनचिदधिगतम्। इयं हि सप्तशती 'मुक्तक' पद्यानां संग्रहः। *मुक्तकं हि तद् भवति यद्धि पूर्वापर-कथासंबन्धं विनापि स्वतन्त्रतया वाचकानां मनसि रसं संचारयितुं भवेत् समर्थम्। पूर्वापरसंबन्धं विना केवलमेकमात्रं पद्यं तदैव चित्ताकर्षकं भवेत् यदा हि तत् सर्वात्मना निर्दोषं रसनिर्भरं च भवेत्। प्रबन्धकाव्येषु (काव्य-आख्यायिकादिषु) रोचकतमस्य कथानकस्य नैपुण्येन निर्वाहे कृते वाचकस्य मानसं कथारसनिलीनतया सामान्येऽपि पद्ये गुणदोषादि-विचारविषये प्रायः शिथिलमेव भवति। तत्र हि पूर्वापरसंबद्धा कथैव तथा वशीकारिणी भवति यथा उत्तरोत्तरघटनाऽऽस्वादाय उत्कण्ठितं चेतः पद्यानां गुणदोषादिविचारं परित्यज्य अग्रतनकथाऽवगमार्थमेवाऽग्रेसरं भवति। मुक्तकानि तु प्रत्येकपद्यान्येव स्वतन्त्राणि भवन्तीति रसान्वेषण-लोलुपं वाचकानां मनस्तत्रैव साभिनिवेशं प्रवर्तते, न तत्र कथा सहायिका भवति। अत एव मुक्तककाव्यं यावत्किल व्यङ्ग्यादिचमत्कार-पूर्णं गुणनिर्भरं दोषैरस्पृष्टं च न भवति, न तावत्तत्र सफलता प्राप्यते कविना। लोचनकारेण स्पष्टैरक्षरैरुक्तम्—'यन्महाकविव्यपदेशः एवंविध-रचनाभिरेव भवतीति।'

---

* 'पूर्वापरनिरपेक्षेणापि हि येन रसचर्वणा क्रियते तदेव मुक्तकम्। ध्वन्यालोकलोचनम्'।

## अमरुकः

गाथासप्तशतीं विहाय संस्कृतभाषायां यानि किल प्राचीनानि मुक्तककाव्यानि प्रसिद्धानि तेषु हि अमरुकशतकम्, आर्यासप्तशती चेत्येव सुप्रसिद्धे। अमरुकशतकं हि अमरुकनाम्नो मृतस्य कस्यचिद्राज्ञः शरीरे परकायप्रवेशविद्यया प्रविश्य भगवता शङ्कराचार्येण निर्मितमिति पण्डितसमाजे प्रसिद्धिः। उक्तं चापि अमरुकशतकटीकाकारेण देवशङ्करेण—
'क्व मे मन्दा बुद्धिः क्व च रसमयं शङ्करवचः'।

भगवतः शङ्कराचार्यस्योद्भवसमयः ८४५ तमो विक्रमसंवत्सर इति यज्ञेश्वरपण्डितेन 'आर्यविद्यासुधाकरे' साधितम्। केषांचिन्मते तु शंकराचार्यस्य समयः ख्रिष्टस्य सप्तमी शताब्दी। यत्किञ्चिदस्तु-परं गाथानिर्मातुः शकप्रवर्तकात् शालिवाहनान्न स प्राचीन इति तु निर्विवादम्। एतन्निर्मितममरुशतकं संस्कृतसाहित्ये महद् गौरवमधिगच्छति। अमरुकतुलनायाः कश्चिदन्यो मुक्तकनिर्माता नासीत्तस्मिन् समये इति बभूव प्रसिद्धं सहृदयगोष्ठ्याम्। अस्य हि एकैकं पद्यं शतप्रबन्धकाव्येभ्योऽप्यधिकमभिमन्यते स्म सहृदयैः। अत एव हि चिरन्तनी प्रसिद्धिः 'अमरुककवेरेकः श्लोकः प्रबन्धशतायते।' ध्वनिस्थापकः श्रीमान् आनन्दवर्द्धनाचार्योऽपि अमरुककवेरेव मुक्तकपद्यानि सर्वोत्तमानि परिगणयामास। एतानि हि मुक्तकानि शृङ्गाररसस्य भावस्य चोदाहरणतया सर्वत्रैव साहित्ये सुप्रसिद्धानि। एवं किल अमरुको 'मुक्तक'काव्यविषये सर्वनिर्मुक्तं स्थानं प्राप्याऽपि गाथासप्तशत्याः समीपे ऋणी संपद्यते। यतो हि स्थाने स्थाने अमरुकेण गाथानामर्थः अविकलमुपजीवितः। ये किल महोदया एतद् द्रष्टुमिच्छन्ति ते मत्संग्रथित 'संस्कृतगाथासप्तशत्याः' भूमिकायां सोदाहरणं सप्रमाणं चेदं द्रष्टुं शक्नुयुः। विस्तरभयान्नात्र तदुद्धारः क्रियते।




द्वितीयं तावन्मुक्तककाव्यम् ‘ आर्यासप्तशती ’ । एतस्या निर्माता उत्कलदेशीयः श्रीगोवर्द्धनाचार्यः । अस्य हि प्रतिष्ठा नासीत्तस्मिन् समये साधारणी । अयं हि शृङ्गाररसवर्णनायामद्वितीयः परिगणितस्तद्रसिकैः । गीतगोविन्दकर्त्रा जयदेवेन साभिमानमुक्तम्—“शृङ्गारोत्तरसत्प्रमेयरचनैराचार्यगोवर्द्धनस्पर्धी कोपि न विश्रुतः ” । स्वयं गोवर्द्धनाचार्यस्यापि स्वनिर्मितायामार्यासप्तशत्यामासीत्पूर्णोऽभिमानः । अयं स्वमुखेन प्रशंसति-

‘मसृणपदरीतिगतयः सज्जनहृदयाभिसारिकाः सुरसाः ।
मदनाद्वयोपनिषदो विशदा गोवर्द्धनस्यार्याः ॥’
‘कविसमरसिंहनादः स्वरानुवादः सुधैकसंवादः ।
विद्वद्विनोदकन्दः संदर्भोऽयं मया सृष्टः ॥ ’

किन्त्वेवंविधमपरिसीममभिमानं वहन्नयमपि गाथासप्तशतीं दृष्ट्वा तु मूर्द्धानमेवाऽभिनमयति । अयमारम्भे स्वयं वक्ति—यत्प्राकृते ( सप्तशत्यादिषु ) यथाऽयं विषयः ( शृङ्गारः ) स्वाभाविकश्च मनोहरश्च समभवन्न तथाऽधुना संस्कृतभाषायां मयाऽऽनेतुं शक्य इति—‘वाणी प्राकृतसमुचितरसा बलेनैव संस्कृतं नीता ’ । एवं शृङ्गारवर्णनार्थमाचार्यपदवीं धारयन् सर्वोत्कृष्टः श्रीगोवर्धनाचार्योपि गाथासप्तशतीमिमां प्रधानतया उपजिजीव । एतामुपजीवन्नपि चायं शृङ्गारविषये गाथावदौचित्यं निर्वोढुं नाऽभूत्प्रभुः । तदिदमपि संस्कृतगाथासप्तशतीभूमिकायां विस्तरेण प्रतिपादितम् । अस्तु, अयं किल संस्कृत-मुक्तक-काव्यानामितिहासः ।

'छायोपजीवी पदकोपजीवी पादोपजीवी सकलोपजीवी ।
भवेदथ प्राप्तकवित्वजीवी स्वोन्मेषतो वा भुवनोपजीव्यः ॥'

तत्र भुवनोपजीव्यो भगवान् व्यासो निर्दिष्टस्तेन । ततश्च मुक्तककाव्यजगति सेयं सप्तशत्येव सर्वोपजीव्येति स्वीकर्तव्यमेव भवेत् ।

इयं हि सप्तशती प्राकृतभाषायाश्चरमोत्कर्षकाले निर्मिताऽभवदिति सहृदयानां प्रत्यक्षं स्यात् । यतो हि सर्वतः पुरातनी सेयं संस्कृतभाषा साहित्यविषये शनैः शनैस्तावन्तमुत्कर्षं प्राप यथाऽस्यास्तुलनायां न कापि भूमण्डलस्य भाषा (मध्ययुगे) स्थातुमशकत् । एतस्या माधुर्यं च गौरवं च साहित्यवैपुल्यं च सौष्ठवं च सर्वैरेव मार्मिकैस्तस्मिन् समये स्वीकृतमासीत् । ततश्च अनया सह केवल साधारणलोकानां व्यवहारमात्रसाधिकायाः प्राकृतभाषायाः का नाम तुलनाकथा संभवेत् ? किन्तु विपरिवर्तननियमानुसारं यस्मिन् समये प्राकृतभाषा व्यवहारभाषात्वं विहाय शनैः शनैः साहित्यसिंहासनमध्यारुरोह, सहृदयधुरीणानां महाकवीनां चादरभूमिरभूत्, तस्मिन्नेव समये सेयं प्राकृतभाषा संस्कृतभाषायाः स्पर्द्धायै पदमग्रे न्यधात् । स्पर्द्धैव किम्, बहुभिः कविभिस्तु तस्मिन् समये एतदपि प्रोक्तं यत् साहित्यविषये यथा प्राकृतभाषा मधुरा न तथा संस्कृतमिति । प्राकृतभाषापक्षपातिनामेव कवीनां सेयं संमतिर्भवेदेतदपि नास्ति । ये किल संस्कृतभाषायाः कोविदेषु मूर्द्धन्याः संमन्यन्ते स्म तेऽपि प्राकृतप्रशंसागीतमुत्कण्ठया गायन्ति स्म । यायावरमूर्द्धन्यं राजशेखरमहाकविं को वा संस्कृतज्ञो न जानीयात्, यस्य हि बालरामायणादीनि दृश्यकाव्यानि, काव्यमीमांसाभिधश्च अपूर्व आकरग्रन्थः सर्वानपि मार्मिकान् वशीकरोति । राजशेखरसदृशा मार्मिका अपि संस्कृततुलनायां प्राकृतं प्रशंसन्ति । आह सः—

* 'परुसा सक्कअबन्धा पाउअबन्धो वि होइ सुउमारो ।
पुरुसमहिलाणँ जेत्तिअमिहन्तरं तेत्तियमिमाणम् ॥ '

( कर्पूरमञ्जरी )

× 'ललिए महुरक्खरए जुवईजणवल्लहे ससिंगारे ।
सन्ते पाइअकव्वे को सक्कइ सक्कअं पढिउम् ॥ '

( वज्जालग्ग )

एतस्येदमेव कारणं यत्प्राकृतभाषायां गाथासप्तशतीसदृशानामनुपमकाव्यानां सृष्टिरासीत् । अस्याः सप्तशत्याः सप्तशतसंख्याकेषु पद्येषु एकमपि पद्यं तादृशं नास्ति यद्धि केनचिदपि चमत्कारेण विरहितं भवेत् । प्रत्येकपद्ये ( ध्वनिः ) व्यङ्ग्यार्थश्च प्रचुरं खेलति । यद्धि युगं प्राकृतभाषायाः कृते-चरमोत्कर्षमयमासीत्तस्मिन् समये तु एतस्याः सप्तशत्याः परमादरो भवेदेव, परं यस्मिन् काले प्राकृतप्रचारो निरुद्धोऽभूत् संस्कृतसाम्राज्यं च पुनरपि पूर्ववत् निष्कण्टकम् प्रावर्तत तस्मिन्नपि समये सप्तशत्या अस्याः प्रभाव. पूर्णरूपेण सहृदयानां मानसमधिचकार । अत एव हि संस्कृतभाषायाः परमाचार्यैरपि— आनन्दवर्द्धनाचार्य–मम्मटभट्ट–विश्वनाथादिभिः स्वस्वसाहित्यनिबन्धेषु सेयं सप्तशती सगौरवमुदाहृता । बाणराजशेखरादिभिः स्वग्रन्थादौ सेयं सप्तशती सुबहु प्रशंसिता । आह हर्षचरिते बाणः—

---

*' परुषाः संस्कृतबन्धाः प्राकृतबन्धोपि भवति सुकुमारः ।
पुरुषमहिलानां यावदिहान्तरं तावदेतेषाम् ॥ '

× ' ललिते मधुराक्षरे युवतिजनवल्लभे सशृङ्गारे ।
सति प्राकृतकाव्ये कः शक्नोति संस्कृतं पठितुम् ॥ '

'अविनाशिनमग्राम्यमकरोत्सातवाहनः ।
विशुद्धजातिभिः कोषं रत्नैरिव सुभाषितैः ॥'

भोजेन तु सरस्वतीकण्ठाभरणे प्रसङ्गानुसारं प्रायः सेयं सर्वापि सप्तशती समुदाहृता । अत्र हि हेतुरस्या असामान्या गुणगणा एव । एककोटिपद्यानां मध्यात् सप्तशतसंख्याकानि पद्यानि उत्तमोत्तमानीति निर्धार्य इयं सप्तशती संकलितेति सर्वत्र सुप्रसिद्धम् + ।




अस्याः सप्तशत्या निर्माता नैकः कविः । भारतवर्षमात्रस्य ये किल तस्मिन् समये सुप्रसिद्धाः प्राकृतकवय आसन् तेषां सर्वेषामेव अयं सरस्वतीनिःस्यन्दः । किन्तु यस्य शालिवाहनस्य नाम्ना सेयं सप्तशती प्रसिद्धा स हि एतस्याः केवलं नाममात्रार्थं संकलनकर्ता । स्वयं सप्तशत्यां प्रत्येकशतकस्यान्ते लिखितम् – 'कविवत्सलमुखसुकविनिर्मिते' ।

'कविवत्सल-हाल-शाल-शालिवाहन' इत्याद्युपनामकः सातवाहनभूपतिः दक्षिणप्रदेशे 'प्रतिष्ठान' नगरस्याधिपतिर्बभूव, यद्धि सांप्रतं 'पैठण' नाम्ना चिह्नभूतेन परिचीयते। अस्यैव सभायां बृहत्कथानिर्माता गुणाढ्यः, कालापव्याकरणनिर्माता शर्ववर्मा, एतत्प्रभृतयो महाविद्वांसः समभवन् । अयं हि प्राकृतकवीनां कृते कल्पतरुरिव समभूत् । विक्रमा-

---

+ 'सत्त सताइं कइवच्छलेण कोडीअ मज्झआरम्मि ।
हालेण विरइआइं सालंकाराणं गाहाणम् ॥ १।३'

दित्येन यथा संस्कृतकवयः समादृताः, तथा अनेन प्राकृतकवीनां समादरं कृत्वा प्राकृतभाषायाः सर्वतः प्रचारः कृतः । यथा सुप्रसिद्धमिदं प्रोक्तं सरस्वतीकण्ठाभरणे—

'के नासन्नाढ्यराजस्य राज्ये प्राकृतभाषिणः ।
काले श्रीसाहसाङ्कस्य के न संस्कृतभाषिणः ॥'

' आढ्यराजः शालिवाहनः । साहसाङ्को विक्रमादित्यः ' इति टीकाकारो रत्नेश्वरमिश्रः ।

महाप्रभावशालिनः प्राकृतरसिकस्य चास्य सभायां ये ये कवयः पुरस्कारलालसया समवेताः समभवन् तेषां सर्वेषामेव काव्यान्येकत्र कृत्वा तेषां मध्यात् इयं सप्तशती संगृहीतेति स्पष्टं प्रतिभाति। एतस्याः संकलनकर्तापि स्वयं सातवाहनो नास्ति । यतो ह्यस्यां सप्तशत्यां सातवाहनस्य कृत्रिमप्रशंसापराण्यपि बहूनि पद्यान्युपलभ्यन्ते । न हि कीदृशोपि कीर्तिलोलुपः पुरुषः स्वहस्तेनैव स्वप्रशंसामेवंरूपेण निबध्नीयात्। तर्हि शालिवाहनसदृशो मनस्वी राजा स्वमुखेन स्वप्रशंसां गायेदिति को वा सावधानमतिर्मानयेत् ?

' आपन्नानि कुलानि द्वावेव हि विदतुरुन्नतिं नेतुम् ।
गौर्याश्च हृदयदयितोऽथ शालिवाहननरेन्द्रश्च ॥ ' ५।६७ ॥

सन्त्येवंविधान्यपि बहूनि पद्यानि । एवंविधानि पद्यानि स्पष्टं सूचयन्ति यत् इमानि पुरस्कारप्रत्याशया राजसभायामुपस्थितैर्नानाकविभिरेव पठितानीति । ततश्च—बहुषु पद्येषु शनैः शनैः राशीभूतेषु राज्ञो रुचिमुपलक्ष्य केनचित्कविना राजनाम्ना सेयं सप्तशती संकलितेति प्रती-

यते। संकलनकर्ता अयं कविश्च कदाचित् श्रीपालितनामा भवेदिति बहूनामनुमानम्। यतो हि अभिनन्दकृते रामचरितमहाकाव्ये—'हालेनोत्तमपूजया कविवृषः श्रीपालितो लालितः' इत्याद्युपलभ्यते।

इयं सप्तशती सातवाहनस्य यौवनकाले संकलितेत्यपि सिध्यति। यतो ह्यस्यां प्राधान्येन शृङ्गाररस एव सर्वतः परिखेलति। यद्यपि तस्मिन् समये साहित्यसेवकानां रुचिरेव तादृशी बभूव परं यादृशशृङ्गारवर्णनमत्रोपलभ्यते तादृशं हि यौवनकाले एव कश्चिदभिरोचयेत्, नाऽन्यकाले। अस्यां यद्यपि प्रधानतः शृङ्गारमयकाव्यान्येव सन्ति तथापि नीत्युपदेशाः, प्राकृतिकवर्णनानि, आचारसूचिका अन्या अपि सरससूक्तयो बह्व्यः प्राप्यन्ते। एतस्यैवेदं कारणं यत्सेयं सप्तशती न केवलं प्राकृतसाहित्ये एव अपि तु संस्कृतसाहित्येऽपि सुस्थिरं समादरं लेभे।

## गाथारत्नसमुच्चयः

किन्तु या गाथासप्तशती पूर्वोक्तया रीत्या यावन्मात्रसप्तशतीनामुपजीव्या, सा संस्कृताध्यायिभिः पठनपाठनयोर्न परिगृहीतेति बहूनामाश्चर्यमेव। मम दृष्ट्या तु एतस्येदमेव कारणं यत् इयं सप्तशती प्राकृतभाषायामभूत्। प्राकृतभाषा च सांप्रतमप्रचलितत्वाद् दुर्बोधा, निरुपयोगा च। संस्कृते तु याऽस्याश्छाया (अनुवादः) भवति सा तु न पद्यरूपा। अत एव एतस्यां मनोयोगोपि न भवति। विशेषतश्च सेयं सप्तशती शृङ्गारमयी। अत एव पाठ्यकोटौ इमां स्थापयितुं न प्रभवन्ति शिक्षाधिकारिणः। किन्तु अस्यां सप्तशत्याम् प्राकृतिकदृश्यानां नीतेश्चापि वर्णनं सुललिततमं बहुत्रोपलभ्यते। घोरं शृङ्गारं परित्यज्य अस्याः

सप्तशत्या एवंविधा गाथाः समुच्चित्य चेदेकं संकलनं प्रकाश्येत तर्हि संस्कृताध्यायिनामुपयुक्तं स्यादित्यभून्मे विचारः ।

अस्याः सप्तशत्या मन्निर्मितः संस्कृतपद्यानुवादः 'संस्कृतगाथा-सप्तशती' नाम्ना निर्णयसागरयन्त्रालये साम्प्रतमेव प्रकाशितः, येन सह 'व्यङ्ग्यसर्वंकषा' नाम्निका मन्निर्मिता नवीना टीकापि मुद्रिताऽस्ति । एतस्य प्राक्कथनम् ( Foreword ) गवर्नमैन्टसंस्कृतकालेजाध्यक्षैः प्राच्यविद्यापारगामिभिः श्रीमद्भिर्गोपीनाथकविराजमहोदयैर्लिखितम् । गाथासप्तशत्याः हालस्य च विषये बहुतरं परिज्ञातं भवेदिति कृत्वा तदेतत्सहैव प्रकाश्यते ।

वसन्तपञ्चमी १९९१वि० | भट्टश्रीमथुरानाथशास्त्री
जयपुरराजकीयसंस्कृतकालेजसाहित्यप्रधानाध्यापकः

॥ श्रीः ॥

# गाथारत्नसमुच्चयः

## [ १ ]

**प्रमथपते रोषारुणगौरीमुखचन्द्रसंचरत्प्रतिमम् ।**
**कलिताऽर्घसरसिरुहमिव सन्ध्यासलिलाञ्जलिं नमत ॥१॥**

रात्रौ तथा प्रदर्शितप्रणयोऽप्ययं प्रातरेव मां विहाय कथमन्यां ध्यायतीति रोषेण अरुणं यद् गौरीमुखं तदेव चन्द्रः तस्य संचरन्ती संक्राम्यन्ती प्रतिमा प्रतिबिम्बो यत्र । अत एव कलितार्घसरसिरुहमिव रक्तमुखप्रतिबिम्बव्याजेन गृहीतार्घकमलमिव प्रमथपतेः शिवस्य सन्ध्याकालिकं सलिलाञ्जलिं यूयं प्रणमत ॥ भगवन्तं शिवं प्रातः सन्ध्यां ध्यायन्तं दृष्ट्वा गौर्या मनसि संदेहो जातो यदयं मां विहाय अन्यां स्त्रियं ध्यायति । अत एव कोपेन तस्या मुखमरुणमभवत् । तन्मुखस्य च प्रतिच्छाया शिवस्य अर्घ्याञ्जलौ प्रतिबिम्बिता । तथा च सोयं सलिलाञ्जलिस्तथा प्रतीतोऽभवत् यथा अर्घ्याञ्जलौ रक्तकमलं विन्यस्तं भवेत् । सूर्याय अर्घ्यप्रदानसमये जलाञ्जलौ पुष्पं विन्यस्यत इति सदाचारः । ततश्च–एतादृशं भगवतः शिवस्य सन्ध्यासलिलाञ्जलिं नमत ।

---

### 'प्राकृतगाथा'

पसुवइणो रोसारुणपडिमासंकन्तगौरिमुहअन्दम् ।
गहिअग्घपङ्कअं विअ संझासलिलाञ्जलिं णमह ॥ १ ॥

( पशुपते रोषारुणप्रतिमासंक्रान्तगौरीमुखचन्द्रम् ।
गृहीतार्घपङ्कजमिव सन्ध्यासलिलाञ्जलिं नमत ॥ )

प्रातः सन्ध्यावर्णनेन ग्रन्थस्यारम्भः सूचितो ग्रन्थकारेण । एवमेव–अन्तेपि–'सन्ध्योपात्तजलाञ्जलि०' इति सायंसन्ध्यावर्णनेन समाप्तिं सूचयिष्यति । प्रमथानां पारिषदानां पतिरित्यर्थं सूचयता 'प्रमथपतेः' इति पदेन तु–'सर्वेषां प्रमथानामेव सविधे मां विहाय अयमन्यां ध्यायतीति' पार्वत्याः प्रणयकोपातिशयं व्यञ्जयति ।

श्यामायितेष्वभिनवप्रावृड्रसितेषु लसति दिवसेषु ।
नृत्यं रभसोन्नामितशिरोधराणां मयूरवृन्दानाम् ॥२॥

अभिनवानि प्रावृषः वर्षाकालस्य रसितानि (अर्थात् मेघगर्जितानि) येषु, एतादृशेषु । मेघाच्छादितदिनकरतया श्यामायितेषु । श्यामा रजनी तत्सदृशेषु दिवसेषु रभसेन मदजनितशीघ्रतया उन्नामितग्रीवाणां मयूरसमूहानां नृत्यं लसति शोभते । विरहिणां कृते रजनी अनिर्वचनीयदुःखदात्री भवति । इह तु दिवसा अपि रजनीयन्ते । अत एव एवंविधे समये वर्हिनं गन्तव्यमिति विरहिण्या कान्तं प्रतिध्वन्यते । नवीनानि प्रावृड्रसितान्याकर्ण्य रभसेन मेघावलोकनार्थं मयूरैर्ग्रीवा उन्नाम्यन्ते ( उच्चैःक्रियन्ते ) । अत एव प्राकृते प्रोक्तस्य 'प्रसारित'पदस्यापेक्षया उन्नामितेत्येव सम्यक् ।

प्रोत्फुल्लघनकदम्बा निर्धौतशिलाः प्रमत्तकेकिकुलाः ।
उत्साहयन्ति नियन्निर्झरमुखरा गिरिग्रामाः ॥ ३ ॥

प्रोत्फुल्लाः विकसितकुसुमा घनाः कदम्बवृक्षा येषु ते । वर्षाजलेन

---

अहिणवपाउसरसिएसु सोहँइ साआइएसु दिअहेसु ।
रहसपसारिअगीवाणँ णच्चिअं मोरवुन्दाणम् ॥ २ ॥

( अभिनवप्रावृड्रसितेषु शोभते श्यामायितेषु दिवसेषु ।
रभसप्रसारितग्रीवाणां नृत्यं मयूरवृन्दानाम् ॥ )

स्वच्छशिला: ।'प्रमत्तमयूरसमूहा निर्गच्छद्भिः निर्झरैः मुखराः शब्दायमानाः। गिरिसमीपस्था ग्रामाः वर्षासमये रसिकानां द्विगुणमुत्साहं वर्द्धयन्तीत्यर्थः ।

खरमारुतगलहस्तितगिरिकूटाऽऽपतनभिन्नदेहस्य ।
कालजलदस्य पश्यत जीव इव हि धुकधुकायते विद्युत् ॥४॥

खरमारुतेन प्रचण्डपवनेन वेगाद् गलहस्तितः ( गलहस्तं प्रदाय प्रेरितः ) । अतएव गिरिकूटात् गिरिशृङ्गात् आपतनेन भिन्नदेहस्य विशीर्णशरीरस्य । कालजलदस्य श्याममेघस्य जीव इव जीवितमिव ( प्राणा इव ) विद्युत् धुकधुकायते धुकधुकशब्दपूर्वकं कम्पते इत्यर्थः। अत्युच्चस्थानात्पतितस्य विशीर्णदेहस्य जनस्य यथा हृदये कम्पो भवति तथाऽयं विद्युत्कम्प इत्याशयः ।

---

पप्फुल्लघणकलम्बा णिद्धोअसिलाअला मुइअमोरा ।
पसरन्तणिज्झरमुहला ओसाहन्ते गिरिग्गामा ॥३॥

( प्रोत्फुल्लघनकदम्बा निर्धौतशिलातला मुदितमयूराः ।
प्रसरन्निर्झरमुखरा उत्साहयन्ति गिरिग्रामाः ॥ )

खरपवणरअगलत्थिअगिरिऊडावडणभिण्णदेहस्स ।
धुकाधुकइ जीअं व विज्जुआ कालमेहस्स ॥४॥

( खरपवनरयगलहस्तितगिरिकूटापतनभिन्नदेहस्य ।
धुकधुकायते जीव इव विद्युत्कालमेघस्य ॥ )

'काल' पदेन अकीर्तनीयनामा मृत्युरपि सूच्यते। तथा च—मृत्युनामग्रहणेन गिरिपतन-देहविशरणादिचर्चारूपेणाऽमङ्गलेन च यात्रायाः प्रतिरोधो ध्वन्यते। एवं च—'यदि वर्षासु मे विरहं संपादयसि, तर्हि ममापीयं दशा भाविनी' इति प्रवासिनं स्वामिनं प्रति व्यज्यते। घुकघुकायते इत्यनुकरणनिष्पन्नो नामधातुः।

अविरलनिपतन्नवजलधाराघनरज्जुनिबिडसंघटिताम्।
अप्रभवन्नुत्क्षेप्तुं रसतीव महीं घनो विलोकयत ॥५॥

घनो मेघः। अविरलं निरन्तरं निपतन्त्यो नवजलधारा एव घनाः सान्द्रा रज्जवः, ताभिः निबिडं संघटितां बद्धाम्। महीम् (पृथिवीं) उत्क्षेप्तुम् ऊर्ध्वम् आकर्ष्टुम्। अप्रभवन् अशक्नुवन् सन्निव रसति शब्दायते, इति विलोकयत। इमा निरन्तरासारा जलधारा न सन्ति, किन्तु पृथिवीमूर्ध्वमाकर्ष्टुं बद्धा निबिडा रज्जवः सन्ति। तासां रज्जूनां द्वारा महीमुत्थापयितुमशक्नुवन्नयं जलधरः श्रमविनोदार्थं शब्दायते, इत्युत्प्रेक्षा। अन्येऽपि बृहत्पाषाणादिकं रज्जुभिर्बद्ध्वा ऊर्ध्वमुत्क्षिपन्तो भारवाहा शब्दं कुर्वन्ति—इति भावः। बद्धामित्यनुक्त्वा संघटितामिति कथनेन संग्रथनं सूच्यते। तेन रज्जुद्वारा परितः संग्रथ्य ऊर्ध्वाकर्षणोत्क्षेपणाज्जलधाराणां सान्द्रत्वातिशयो ध्वन्यते।

---

अविरलपडन्तणवजलधारारज्जुघडिअं पअत्तेण।
अपहुत्तो उक्खेत्तुं रसइ व मेहो महिं उअह ॥५॥

( अविरलपतन्नवजलधारारज्जुघटितां प्रयत्नेन।
अप्रभवन्नुत्क्षेप्तुं रसतीव मेघो महीं पश्यत ॥ )

धाराविधौतवदना लम्बितपक्षा निकुञ्चितग्रीवाः ।
वृतिवेष्टनेषु काकाः शूलाभिन्ना इव प्रदृश्यन्ते ॥६॥

ऊर्ध्वकृतमुखत्वात् जलधाराभिर्धाव्यमानम् ( विधौतम् प्रक्षालितम् ) मुखं येषां ते । लम्बितौ प्रसारितौ पक्षौ यैस्ते । पक्षौ प्रसार्य, ग्रीवां कुब्जतयाऽवकुञ्च्य, क्षेत्राणां कण्टकवृतिषु 'बाड' काकास्तथा स्थिताः सन्ति यथा ऊर्ध्वमुखास्ते उन्नामितशूलाग्राकारचञ्चुत्वात् शूलेन आ ( समन्तात् ) भिन्ना इव दृश्यन्ते । धान्यक्षेत्राणां कण्टकवृतिषु पक्षौ प्रसार्य, ग्रीवाम् अवकुञ्च्य, चञ्चूं च ऊर्ध्वं कृत्वा, काकास्तथा निश्चलमवतिष्ठन्ते यथा शूलप्रोता भवेयुरित्याशयः । तेषामूर्ध्वीकृता चञ्चुः शरीरं विद्ध्वा ऊर्ध्वं निर्गतः शूलाग्रभाग इवालोक्यते इति भावः । चञ्चलानां काकानामेवं निर्भयमवस्थित्या दुर्दिनमपि चिरस्थायीति शृण्वन्तं प्रतिध्वन्यते ।

मौक्तिकमायतकण्ठो मरकतसूचीनिविद्धमिव पिबति ।
प्रावृट्काले बर्ही तृणाग्रसंगतमुदकबिन्दुम् ॥ ७ ॥

---

धाराधुव्वन्तमुहा लम्बिअवक्खा णिउञ्चिअग्गीवा ।
वइवेढनेसु काआ सूलाहिण्णा व दीसन्ति ॥६॥
( धाराधाव्यमानमुखा लम्बितपक्षा निकुञ्चितग्रीवाः ।
वृतिवेष्टनेषु काकाः शूलाभिन्ना इव दृश्यन्ते ॥ )

मरगअसूईविद्धं व मोत्तिअं पिअइ आअअग्गीओ ।
मोरो पाउसआले तणग्गलग्गं उअअबिन्दुम् ॥७॥
( मरकतसूचीविद्धमिव मौक्तिकं पिबत्यायतग्रीवः ।
मयूरः प्रावृट्काले तृणाग्रलग्नमुदकबिन्दुम् ॥ )

बर्ही मयूरः प्रावृट्काले मरकतसूचीनिविद्धं मरकतस्य हरित-वर्णस्य गारुत्मतमणेः पन्ना इति ख्यातस्य । सूच्या सूक्ष्मशलाकया निविद्धं कृतच्छिद्रतया प्रोतं मौक्तिकमिव स्थितं तृणाग्रसंगतं जलबिन्दुम् आयत-कण्ठः सन् पिबति । पानसमये जलबिन्दुपर्यन्तं चञ्चुसंचालनार्थं लम्बाय-मानग्रीवो भवतीत्यर्थः । ग्रीवां लम्बां कृत्वा मयूरो हरिततृणाग्रगतं जलबिन्दुं तथा पिबति यथा हरितमणिनिर्मितसूक्ष्मशलाकाप्रोतं मौक्तिक-मेवाश्नातीत्याशयः । तृणाग्रभागस्थितस्य जलबिन्दोः स्वाभाविकी शोभा, मयूरस्य च पानकालिकः स्वभावोऽत्र चित्रित इति स्वभावोक्ति-रलंकारः । तृणाग्रभागे जलबिन्दोः स्थितिवर्णनेन—स्थानस्य जनसंचार-शून्यता सूच्यते ।

दरभिन्नशुक्तिसंपुटनिलीनहालाहलाग्रपुच्छनिभम् ।
पक्वाम्रास्थिविनिर्गतकोमलमाम्राङ्कुरं पश्य ॥ ८ ॥

दरभिन्ने ईषत्स्फुटिते शुक्तिसंपुटे ( शुक्त्योः 'सींप' इति ख्यातयोः संपुटे गर्भे ) निलीनः गुप्तः ईषद्दृश्यमान इत्यर्थः । यो हालाहलः 'बह्मनिया' इति प्रसिद्धो जन्तुविशेषः, तस्य पुच्छाग्रसदृशम् ।

---

दरफुडिअसिप्पिसंपुडणिलुक्कहालाहलग्गछेप्पणिहम् ।
पक्कम्बट्ठिविणिग्गअकोमलमम्बङ्कुरं उअह ॥८॥

( ईषत्स्फुटितशुक्तिसंपुटनिलीनहालाहलाग्रपुच्छनिभम् ।
पक्वाम्रास्थिविनिर्गतकोमलमाम्राङ्कुरं पश्यत ॥ )

पक्वस्य आम्रफलस्य यद् अस्थि ( 'गुठली' ) ततो विनिर्गतं च कोमलं च । आम्रस्याङ्कुरं पश्य । 'हालाहलो ब्रह्मसर्पे' इति मेदिनी । 'विलबाह्मणी' इति जयपुरप्रान्ते । बीजकोषनिर्गतस्य आम्राङ्कुरस्य वर्णाकारौ हालाहल-पुच्छसदृशौ भवतः । ततश्च—यदि वर्षासमयेऽस्मिन्प्रवत्स्यसि तर्हि सोय-माम्राङ्कुरो ब्रह्मसर्प इव मां कथावशेषां कुर्यादिति विरहिण्या कान्तं प्रति सूच्यते ।

मेघमहिषस्य मन्ये ह्युदरे सुरचापकोटिभिन्नस्य ।
अन्त्रमिव लम्बतेऽसौ सवेदनं क्रन्दतो विद्युत् ॥९॥

सुरचापस्य (इन्द्रधनुषः) कोटया तीक्ष्णेन कोणाग्रेण उदरे भिन्नस्य पाटितस्य ( विदारितस्य ) । अतएव सवेदनं क्रन्दतः ( क्रन्दनं रोदनं कुर्वतः ) मेघरूपस्य महिषस्य विदारणाद् बहिर्निर्गतं अन्त्रमिव इयं विद्युत् लम्बते, इति मन्ये । मूले तु—'अन्त्रमिव लम्बते' इति 'णज्जइ' ज्ञायते प्रतीयते इत्यर्थः । इन्द्रधनुषः समीपे गर्जनं कुर्वतः श्याममेघस्य मध्यगता विद्युत्तथा प्रतीयते यथा धनुष्कोटया पाटितस्य, अतएव वेदनावशादार्तनादं मुञ्चतो महिषस्योदरे बहिर्निर्गतम् अन्त्रं लम्बते इत्याशयः ।

---

मेहमहिसस्स णज्जइ उअरे सुरचावकोडिभिण्णस्स ।
कन्दन्तस्स सविअणं अन्तं व पलम्बए विज्जू ॥ ९ ॥

( मेघमहिषस्य ज्ञायते उदरे सुरचापकोटिभिन्नस्य ।
क्रन्दतः सवेदनमन्त्रमिव प्रलम्बते विद्युत् ॥ )

कर्दममग्नहलाग्रोत्कर्षणशिथिलेऽथ निद्रिते पत्यौ ।
अप्राप्तमोहनसुखा घनसमयं पामरी शपते ॥१०॥

कर्दमे वर्षापङ्के मग्नं यत् हलाग्रं हलमुखं तस्य उत् उच्चैः कर्षणपरिश्रमेण शिथिले । पत्यौ भर्तरि । अनिच्छायामपि श्रमशैथिल्यात् झटिति सुप्ते सति । न प्राप्तं मोहनसुखं सुरतसुखं यया, एतादृशी । पामरी कृषीवलभृत्यस्त्री घनसमयं शपति आक्रुश्यति । अन्यसमये पत्या सह संभाषणादिकृतो यावानानन्द आसीत् सोऽप्यनेन लोपित इति वर्षा-समयं निन्दतीत्यर्थः । वर्षासमये क्षेत्रेषु घनः पङ्को भवति । हलचालन-समये च हलस्याग्रभागस्तस्मिन्पङ्के भूयान् मग्नो भवति । क्षेत्रपतेर्भृत्यः (पामरः) हलमुखं महता परिश्रमेणाऽऽकृष्य अग्रतनीं क्षेत्रभूमिं कर्षति । एवं किल संपूर्णं दिनं यावन्महता परिश्रमेण रात्रौ स वराको झटित्येव निद्रितो भवति । वर्षाकालेनोद्दीप्तमन्मथा तत्पत्नी तु संभोगाद्यानन्दमप्राप्य पत्युः परिश्रमदायकं घनसमयं शपतीत्याशयः । कर्दममग्नेत्युक्त्या–हलवा-हनसमये मध्ये मध्ये उपवेशनविश्रामोऽपि कर्दममग्ने स्थले दुर्लभ इति सूच्यते । कृषकस्य गृहे यो भृत्या कार्यं करोति स एवात्र प्रायः ''पामर' पदेन व्यवह्रियते । ततश्च 'पामरी' पदेन एतत्सूच्यते यत् अन्यसेवावश्यस्य तत्पतेर्न तथा स्वातन्त्र्यं यत् हलवाहनकार्ये शैथिल्यं कुर्यात् । अतएव

---

चिक्खिल्लखुत्तहलमुहकड्ढणसिहिले पइम्मि पासुत्ते ।
अप्पत्तमोणहसुहा घणसमअं पामरी सवइ ॥ १० ॥

( कर्दममग्नहलमुखकर्षणशिथिले पत्यौ प्रसुप्ते ।
अप्राप्तमोहनसुखा घनसमयं पामरी शपति )

तस्याः सुखोपलम्भे पारतन्त्र्यं व्यज्यते। शपतीत्यनेन—'आक्रोशं विहाय न तस्या अन्यो वशः' इति मेवान्प्रत्यसूयोदयेन तस्या उत्कण्ठातिशयोऽभिव्यज्यते।

शरदि हि महाह्रदानामन्तः शिशिराणि बहिरथोष्णानि।
जातानि कुपितसज्जनहृदयसदृक्षाणि सकिलानि ॥ ११ ॥

शरत्काले—महतां ह्रदानाम् जलाशयानाम ('झील') सलिलानि। कुपितसज्जनस्य हृदयसदृशानि। अन्तः अभ्यन्तरभागे शीतलानि, अथ बहिः उपरितः उष्णानि जातानि। शरत्काले प्रखरस्तापो न भवति। अत एव महाह्रदानां जलानि उपरित एव तप्तानि भवन्ति अन्तस्तु शीतलानि तिष्ठन्ति। कुपितस्य सज्जनस्यापि हृदयम् 'अग्रे एवं मा भूदिति शिक्षार्थमुपरितः प्रतप्तमिव भाति, अन्तस्तु स्वाभाविकसौजन्येन शान्तशीतलमेव तिष्ठतीत्याशयः। एवं च सज्जनानां कोप'आपातत एव भवति। वास्तवे तु ते न कस्याऽप्यपकारं कुर्वन्तीति भावः।

अन्योन्यकटकलग्नैः सर्वत्र दिशामुखेषु विसरद्भिः।
छल्लीमिव बत मुञ्चति विन्ध्यो मेघैर्विघटमानैः ॥१२॥

अन्योन्यं कटके पर्वतनितम्बे लग्नैः, निविडमामिलितैरिति यावत्। पुनः विघटमानैर्दूरेभवद्भिः, अतएव सर्वेषु दिशामुखेषु प्रसरद्भिः मेघैः।

---

सरए महद्धदाणं अन्ते सिसिराइँ बाहिरुह्णाइं।
जाआइँ कुविअसज्जणहिअअसरिच्छाइँ सलिलाइं ॥११

( शरदि महाह्रदानामन्तः शिशिराणि बहिरुष्णानि।
जातानि कुपितसज्जनहृदयसदृशानि सलिलानि ॥ )

विन्ध्यः (पर्वतः) छल्लीमिव वल्कलमिव मुञ्चति। विन्ध्यपर्वतस्योपरिभागं मेघा पूर्वमाच्छादयन्ति, पश्चाच्च तं परित्यज्य दिक्षु इतस्ततो गच्छन्ति। ततश्च यस्मिन्समये विन्ध्यं परित्यज्य मेघाः पृथग्भवन्ति, तदा तथा प्रतीयते यथा विन्ध्यः त्वचं ( मेघरूपाम् ) परित्यजतीत्यर्थः। यथा कश्चिदुपरितनं वल्कलं विमुच्य अभिनवो भवति, तथा विन्ध्यो मेघाडम्बरं त्वचमिवाऽवमुच्य नवां सुषमां धारयतीति भावः। शरत्कालस्य नवशोभाधायकत्वं व्यज्यते। छल्ली त्वक् 'छाल'। 'छल्ली वीरुधि सन्ताने वल्कले कुसुमान्तरे' इति मेदिनी।

सैन्धवपर्वततुल्यानि पश्य धुततूलपुञ्जसदृशानि।
मुक्तोदकानि सुतनो! शरदि सिताभ्राणि शोभन्ते ॥१३॥

लवणपर्वतसदृशानि, धुतस्य तन्त्याघातेन विश्लिष्टावयवस्य ('धुना हुवा') तूलपुञ्जस्य सदृशानि, त्यक्तजलानि सिताभ्राणि श्वेत-

---

सव्वत्थ दिसामुहपसॉरिएहिँ अण्णोण्णकडअलग्गेहिं।
छल्लिं व्व मुअइ विञ्झो मेहेहिँ विसंघडन्तेहिं ॥१२॥

( सर्वत्र दिशामुखप्रसृतैरन्योन्यकटकलग्नैः।
छल्लीमिव मुञ्चति विन्ध्यो मेघैर्विसंघटमानैः ॥ )

उअ सिन्धवपव्वअसच्छहाइँ धुअतूलपुञ्जसरिसाइं।
सोहन्ति सुअणु मुक्कोअआइँ सरए सिअब्भाइं ॥ १३ ॥

( पश्य सैन्धवपर्वतसदृक्षाणि धुततूलपुञ्जसदृशानि।
शोभन्ते सुतनु मुक्तोदकानि शरदि सिताभ्राणि ॥ )

मेघाः शोभन्ते इति हे सुतनो ! त्वं पश्य । शरत्काले श्वेतमेघाः कीदृशाः प्रतीयन्ते इति स्वाभाविकरूपेणोपमितम् । शरन्मेघव्याजेन निःशेषित-धनान् लोकान् निन्दन्ती सखी वेश्यामाह, इति कश्चित् । ततश्च—पर्वत-सादृश्येन कठोरत्वं जडत्वं च, सैन्धवेत्यनेन द्रुतं द्रवशालितया अस्थिर-मनस्कत्वं सूच्यते । तूल ('रुई') सादृश्येन स्वाभाविक लाघवम्, धुतेत्यनेन बहुशस्तिरस्कृतत्वं च व्यज्यते । अभ्रपदेन च—अत्युच्चैरपि रिक्तैर्मेघैर्यथा न फलसिद्धिस्तथा कुलादिना उन्नतैरपि निर्धनैर्जनैर्नः किं फलमिति वेश्यां प्रति सूच्यते । 'शोभन्ते' इति साकूतोक्तिः । निःशेषितधना इमे न भान्तीति व्यङ्ग्योर्थः । ततश्च ' सुतनो ! ' अर्थात् सुन्दरशरीरशालिन्यास्तव निर्धनै-रेभिर्न किञ्चित्प्रयोजनमिति चरमो ध्वनिः ।

पङ्क्तिं तरुकोटरतो निष्क्रान्तां पश्य पुंशुकानां हि ।
शरदि द्रुमो ज्वरित इव सलोहितं पित्तमिव वमति ॥१४॥

तरुकोटरतः वृक्षकोटरात् निष्क्रान्तां पुंशुकानां नरजातीयानां शुकानां पंक्तिं पश्य । शरत्काले ज्वरयुक्त इव द्रुमः वृक्षः सलोहितं सरुधिरं पित्तमिव वमति । वमतीव । रक्तवर्णाभिः चञ्चू-गलकण्ठिका-भिर्युक्ता हरितवर्णा शुकानां पंक्तिर्वृक्षकोटरान्न निःसरति अपि तु शारद-ज्वरपीडितो वृक्षो रुधिरसहितं हरितवर्णं पित्तं वमतीत्याशयः । शारदज्वरे

---

उअह तरुकोडराओ णिक्कन्तं पुंसुवाणँ रिञ्छोलिम् ।
सरिए जरिओ व्व दुमो पित्तं व्व सलोहिअं वमइ ॥१४॥

( पश्यत तरुकोटरान्निष्क्रान्तां पुंशुकानां पंक्तिम् ।
शरदि ज्वरित इव द्रुमः पित्तमिव सलोहितं वमति ॥ )

सरुधिरस्य पित्तस्य वमनं भवतीति प्रसिद्धम् । शुकाः हरितवर्णाः तेषां चञ्चवो गलकण्ठिकाश्च रक्ता इति द्वयोः साम्यम् ।

अवतरति पश्य नभसो मरकतमणिपद्मरागसंवलिता ।
गगनश्रीगलमध्याद् गलिता किल कण्ठिकेव शुकपंक्तिः १५

गगनश्रीगलमध्यात् आकाशलक्ष्मीकण्ठमध्यात् गलिता पतिता, मरकतमणिभिः हरितमणिभिः ( 'पन्ना' इतिख्यातैः ) पद्मरागैर्माणिक्यैश्च संवलिता घटिता कण्ठिका इव 'कण्ठी' इतिख्यातं कण्ठाभरणमिव शुकपंक्तिः नभसः गगनात् अवतरतीति त्वं पश्य । शुकानां हरितवर्णत्वान्मरकतमणिसादृश्यम्, तच्चञ्चूनां च लोहितवर्णत्वात्पद्मरागसाम्यमत एव सेयमुपमा ।

राजन्ति कुमुददलनिश्चलस्थिता मत्तमधुकरनिकायाः ।
ग्रन्थय इव तिमिरस्य हि शशिकरनिःशेषनाशितस्येमाः ॥१६॥

मधुकरस्वभावान्मधुपानेन मत्ताः । अत एव मदजनितस्तम्भेन

---

उअ पोम्मराअमरगअसंवलिआ णहअलाओं ओअरइ ।
णहसिरिकण्ठब्भट्ठ व्व कण्ठिआ कीररिञ्छोली ॥ १५ ॥

( पश्य पद्मरागमरकतसंवलिता नभस्तलादवतरति ।
नभःश्रीकण्ठभ्रष्टेव कण्ठिका कीरपंक्तिः ॥ )

रेहन्ति कुमुअदलणिच्चलट्ठिआ मत्तमहुअरणिहाआ ।
ससिअरणीसेसपणासिअस्स गण्ठि व्व तिमिरस्स ॥१६॥

( राजन्ते कुमुददलनिश्चलस्थिता मत्तमधुकरनिकायाः ।
शशिकरनिःशेषप्रणाशितस्य ग्रन्थय इव तिमिरस्य ॥ )

कुमुददलेषु निश्चलं स्थिताः मधुकरनिकायाः मधुपसमूहाः । शशिकिरणैः निःशेषं नाशितस्य समापितस्य तिमिरस्य अन्धकारस्य ( कुत्रचित्कुत्रचित् पतिताः ) इमाः ग्रन्थयः पोट्टलिका इव राजन्ति । चन्द्रकिरणैः समग्रमप्यन्धकारं नाशितं परं कुत्रचित्कुत्रचित्तस्यान्धकारस्य ग्रन्थयः पतिताः सन्ति । श्यामवर्णा एते भ्रमरा एव ता इमा ग्रन्थयः सन्तीत्याशयः । मत्ततया निश्चलस्थित्या भ्रमराणाम् अचेतनाभिर्ग्रन्थिभिः साम्यम् । 'इमाः' इति प्रत्यक्षमङ्गुल्या निर्देशः ।

यौवन इव नववर्षाकाले प्रोन्नतपयोधरे याते ।
प्रथमैककाशकुसुमं पलितमिवाऽऽलोक्यते भूमेः ॥१७॥

प्रोन्नताः पयोधराः मेघाः यस्मिन्नेवंभूते वर्षाकाले । प्रोन्नतौ पयोधरौ स्तनौ यस्मिन्नेवंविधे नवयौवन इव याते व्यतिक्रान्ते सति । प्रथममेकं काशपुष्पं भूमेः पलितमिव वार्द्धक्यजनितं केशश्वैत्यमिव अवलोक्यते । तथा च—वर्षाकाले यावती शृङ्गाररसोपकरणसामग्री न तावती शरत्समये इति कञ्चिद्विलासिनं प्रति केनचिन्निभृतं ध्वन्यते ।

निष्पन्नसस्यसंपद् गायति शरदीह पामरः स्वैरम् ।
दलितनवशालितण्डुलधवलमृगाङ्कासु रजनीषु ॥ १८ ॥

निष्पन्ना सस्यसमृद्धिर्धान्यादिसंपत्तिर्यस्य एतादृशः पामरः कृषी-

---

वासारत्ते उण्णअपओहरे जोव्वणे व्व वोलीणे ।
पढमेक्ककासकुसुमं दीसइ पलिअं व्व धरणीए ॥ १७ ॥

[ वर्षाकाले उन्नतपयोधरे यौवन इव व्यतिक्रान्ते ।
प्रथमैककाशकुसुमं दृश्यते पलितमिव धरण्याः ॥ ]

वल: तत्कृत्यो वा । इह अस्यां शरदि । दलित: कण्डित: यो नवशाले: तण्डुल:, तद्वत् धवल: मृगाङ्कश्चन्द्रो यासु । एवंविधासु रात्रिषु स्वैरं निष्प्रतिबन्धं गायति । स्वपरिश्रमेण निष्पादिततया 'निष्पादितसस्यसंपद्' वक्तव्येऽपि 'निष्पन्न' इत्युक्त्या दैववशादेव सर्वान् कृषिविघ्नान् उल्लंघ्य सस्यसंपत्तिर्जातेति तस्या दुर्लभत्वसूचनेन अधिकहर्षजनकत्वं ध्वन्यते । शालीनां परिपाके प्रसन्नचेतस: पामरस्य हृदये तण्डुला एव अहर्निशमावर्तन्ते । अत एव स्वभावसिद्धतया हालिकस्य पक्षे श्वेततण्डुलेनैव चन्द्रस्य साम्यं समञ्जसमित्यालोच्यं मार्मिकै: ।

क्षीरैकपायिना दत्तजानुपतनेन पङ्कमलिनेन ।
पुत्रेणेव हि शालिक्षेत्रेणाऽऽनन्द्यते हलिकः ॥ १९ ॥

क्षीरं तण्डुलारम्भकं जलं दुग्धं च । जानु ऊरुपर्व, उपचाराद्धान्यनालग्रन्थिश्च । दत्तं जानुभ्यां पतनं येन, जानुद्वारा कृतगमन इत्यर्थ: पुत्र-

---

णिप्पण्णसस्सरिद्धी सच्छन्दं गाइ पामरो सरए ।
दलिअणवसालितण्डुलधवलमिअङ्कासु राईसु ॥ १८ ॥

( निष्पन्नसस्यऋद्धि: स्वच्छन्दं गायति पामर: शरदि ।
दलितनवशालितण्डुलधवलमृगाङ्कासु रात्रिषु ॥ )

पङ्कमइलेण छीरेक्कपाइणा दिण्णजाणुवडणेण ।
आनन्दिज्जइ हलिओ पुत्तेण व सालिछेत्तेण ॥ १९ ॥

( पङ्कमलिनेन क्षीरैकपायिना दत्तजानुपतनेन ।
आनन्द्यते हलिक: पुत्रेणेव शालिक्षेत्रेण ॥ )

पत्ते। दत्तं कृतं जानुस्थानीयानां धान्यनालग्रन्थीनां ('पोटा' इति जयपुरे ख्यातानाम्) आरम्भणं येन, ततश्च—धान्यनालग्रन्थीनामारम्भो यस्मिन् जातः ईदृशेन शालिक्षेत्रेण। पुत्रेण इव हालिकः आनन्द्यते आनन्दं प्राप्यते। दुग्धपायिना जानुभ्यां कृतगमनेन पङ्कमलिनेन पुत्रेण यथा आनन्द्यते, तथैव हालिकः तण्डुलारम्भकजलपायिना धान्यनालानां आरम्भयुक्तेन पङ्कमलिनेन क्षेत्रेणापि आनन्द्यते इत्याशयः। जानुगामिना पुत्रेण यथा जनानां हर्षस्तथा अस्य शालिक्षेत्रेणेति शालिक्षेत्रस्य कृषकप्रीतिपात्रत्वं ध्वन्यते। पुत्रो यथा धान्याद्युपार्जनेन पितरं सेवते तथा क्षेत्रमपि हालिकं सेवते इति द्वयोः साम्यं समञ्जसमेव।

कुसुमानि मालतीनां दग्ध्वा माऽवेहि निर्वृतः शिशिरः।
कर्तव्या विगुणानां कुन्दानामपि समृद्धिरथ ॥ २० ॥

मालतीनां मालतीवृक्षाणां कुसुमानि दग्ध्वा शिशिरः शीतर्तुः निर्वृतः सुखी जात इति मा अवेहि जानीहि। अधुना विगुणानां गन्धगुणरहितानां कुन्दानां समृद्धिरपि कर्तव्याऽस्ति। अविवेकी अधिकारी न केवलं गुणिजनानां अपकारमात्रं करोति, किन्तु असाधूनामुन्नतिमप्यसौ संपादयतीति अन्यापदेशेन सुमधुरमभिव्यञ्जितम्। गुणगणशालिनीं नायिकां त्यक्त्वा बाह्यरूपमग्नसारासु स्त्रीषु प्रवर्तमानं नायकं प्रति नायिकासख्याः सोयमुपालम्भ इति कश्चित्। इदानीं केवलं भवत्यास्त्याग एव

---

मालइकुसुमाइँ कुलुञ्चिऊण मा जाणि णिव्वुओ सिसिरो।
काअव्वा अज्जवि विग्गुणाणँ कुन्दाणँ वि समिद्धी ॥ २० ॥

( मालतीकुसुमानि दग्ध्वा मावेहि निर्वृतः शिशिरः।
कर्तव्याऽद्यापि निर्गुणानां कुन्दानामपि समृद्धिः ॥ )

नास्ति । अग्रे अयं निर्गुणानां सपत्नीनां सौभाग्यमपि संपादयिष्यतीति तस्यास्तात्पर्यम् ।

विकसदरविन्दमन्दिरमकरन्दानन्दिता मिलिन्दालिः ।
मधुरमधुमासलक्ष्म्याः कृष्णा मणिमेखलेव शिञ्जाना ॥२१॥

विकसत् ( अत एव बृहत् ) यद् अरविन्दमेव मन्दिरम् । तत्र मकरन्देन पुष्परसेन आनन्दिता मिलिन्दालिः भ्रमरपंक्तिः । शिञ्जाना झण् झण् इति रवं कुर्वती सती । मधुमासलक्ष्म्याः चैत्र-( वसन्त )-मासलक्ष्म्याः कृष्णमणिघटितत्वात् कृष्णा मणिमेखलेव मणिनिर्मितरशनेव । भातीति शेषः । मेखलेव झण्झणायते इति प्राकृते । मेखलेव शिञ्जाना झणझण-शब्दायमाना भातीति संस्कृते । द्वयोरर्थः समानः । श्यामा इयं भ्रमरपंक्ति-र्न शब्दायते, अपि तु कृष्णमणिनिर्मिता मधुमासलक्ष्म्याः काञ्ची झण-झणायते इत्याशयः। भ्रमराणां गुञ्जनशब्दवृद्धौ हेतुः—मकरन्दानन्दितेति । मकरन्दपानेन यदा तेषां आनन्दस्तदा शब्दोप्यधिको भवतीति तत्तात्पर्यम् ।

पश्यत पटलविलम्बितनिजतन्तुतलोर्ध्वपादपरिलग्नम् ।
दुर्लक्ष्यसूत्रसंगतबकुलकुसुममेकमिव हि मर्कटकम् ॥ २२ ॥

पटलात् छदिषः विलम्बितः अवतीर्णो यो निजतन्तुः तस्य तले

---

रुन्दारविन्दमन्दिरमअरन्दाणन्दिआलिरिञ्छोली ।
झणझणइ कसणमणिमेहल व्व महुमासलच्छीए ॥२१॥

( बृहदरविन्दमन्दिरमकरन्दानन्दितालिपंक्तिः ।
झणझणायते कृष्णमणिमेखलेव मधुमासलक्ष्म्याः ॥ )

ऊर्ध्वपादैः परिलग्नम् । दुर्लक्ष्ये अतिसूक्ष्मे सूत्रे संगतम् एकं बकुलकुसुमम् इव स्थितम् मर्कटकं लूतां पश्यत । तृणच्छदिषो लम्बिते निजतन्तौ ऊर्ध्वीकृतैर्निजचरणैर्लम्बमानो मर्कटको नास्ति, अपि तु अतिसूक्ष्मे सूत्रे प्रोतमेकं बकुलकुसुममस्तीत्याशयः। मर्कटकीटस्य आकारस्वभावयोरविकल-वर्णनपरा स्वभावोक्तिः कवेर्लोकदर्शनपाटवं सूचयति। पटलं छदिः'छप्पर'। बकुलकुसुमं ' मौलसिरी ' पुष्पम्। 'अथ मर्कटकः सस्यभेदे वानरलूतयोः' इति मेदिनी ' मकडी '।

मधुमासमारुताऽऽहतमधुकरझंकारनिर्भरेऽरण्ये ।
गायति विरहाक्षरकृतपथिकमनोमोहनं गोपी ॥ २३ ॥

मधुमासपवनेन आहतः संमुखम् आवर्त्तितः यो मधुकराणां भ्रमराणां झंकारशब्दः तेन निर्भरे पूरिते अरण्ये । विरहसूचकैः अक्षरैः कृतं पथिकानां मनोमोहनं यस्मिन् कर्मणि तथा गोपी गायति ।

---

उअह पडलन्तरोइण्णणिअअतन्तुद्धपाअपडिलग्गम् ।
दुल्लक्खसुत्तगुत्थेक्कबउलकुसुमं व मक्कडअम् ॥ २२ ॥

(पश्यत पटलान्तरावतीर्णनिजकतन्तूर्ध्वपादप्रतिलग्नम् ।
दुर्लक्ष्यसूत्रग्रथितैकबकुलकुसुममिव मर्कटकम् ॥ )

महुमासमारुआहअमहुअरझंकारणिब्भरे रण्णे ।
गाअइ विरहक्खरॉबद्धपहिअमणमोहणं गोवी ॥ २३ ॥

( मधुमासमारुताहतमधुकरझंकारनिर्भरेऽरण्ये ।
गायति विरहाक्षराबद्धपथिकमनोमोहनं गोपी ॥ )

विरहवेदनासूचकैरक्षरैर्गुम्फितं गीतं तथा गायति यथा मार्गगामिनां पथिकानामपि मोहो भवति। अस्मद्वनितानामपि मधुमासेऽस्मिन्नेवं विरहवेदना भवेदिति चिन्तया पथिकानां मनोमोह इति तात्पर्यम्। मधुकरझंकारसहकारेण गीतेर्मधुरगभीरनादिता, मधुमासपवनाघातेन च गीतेर्दूरदूरजृम्भणं व्यज्यते। अत एव अरण्ये दूरस्था अपि पथिका मुह्यन्तीत्याशयः। गोपी गोपालिका, कलमगोपी क्षेत्ररक्षिणी वा।

शुकमुखसच्छायैः किल पलाशकुसुमैर्विराजते वसुधा।
बुद्धस्य चरणवन्दनपतितैरिव भिक्षुसंघातैः॥ २४॥

बुद्धस्य गौतमबुद्धस्य चरणवन्दनार्थं पर्यन्ततो दण्डवत्पतितैः 'भिक्षु'समूहैरिव, रक्तवर्णतया शुकमुखसदृशैः पलाशकुसुमैः किंशुकैः 'टेसू' इतिख्यातैः। पृथिवी शोभते। मध्ये आसीनस्य बुद्धदेवस्य चरणवन्दनार्थं सहस्रशो बौद्धभिक्षवः समन्तात् भूमौ यथा प्रणमन्ति तथैव रक्तवर्णपत्रिकायुक्तानि सहस्रशः पलाशकुसुमानि भूमौ पतितानि सन्ति। तैश्च सा शोभते इत्याशयः। लोहितवर्णानि पलाशकुसुमस्य पत्राणि बौद्धभिक्षूणां वस्त्रस्थानीयानि, तद्वृन्तं च शिरःस्थानीयमिति प्रणतभिक्षुसादृश्यं बोध्यम्। वसन्ते किंशुकशोभावर्णनम्, सहैव च प्रवासं गच्छतः कान्तस्य यात्राप्रतिबन्धनं व्यङ्ग्यम्। यतो हि भिक्षु-संन्यस्तादयो यात्रासमये निषिद्धाः।

---

कीरमुहसच्छहेहिं रेहइ वसुहा पलासकुसुमेहिं।
बुद्धस्स चलणवन्दणपडिएहिँ व भिक्खुसंघेहिं॥ २४॥

( कीरमुखसदृशै राजते वसुधा पलाशकुसुमैः।
बुद्धस्य चरणवन्दनपतितैरिव भिक्षुसंघैः॥ )

पथिकः पथिकस्य कथां राजविरुद्धामिवाह साशङ्कम् ।
यत आम्राणां पर्णं तत ईषन्निर्गतं किमपि ॥ २५ ॥

'आम्रवृक्षाणां यतः यस्मात् स्थानात् पर्णं पत्रं ( निर्गच्छति ) ततः तस्मात् स्थानात् ईषत् किञ्चिद् दृश्यमानं किमपि (अर्थात् आम्राङ्कुरनामकं किञ्चित् ) निर्गतम्', इति राजविरुद्धां कथामिव पथिकः अन्यस्मै पथिकाय साशङ्कम् आह कथयति। अङ्कुर इत्यनुक्त्वा किमपीति कथनेन नामग्रहणेपि भयोत्पत्तिः सूच्यते, तेन च पथिकस्य भयाकुलता द्योत्यते। राजविरुद्धकथाजल्पने यथा वक्तुर्भयं भवति तथा आम्राङ्कुरकथाकथने पथिकस्यापि भीतिरिति भावः। 'ईषन्निर्गतम्' इत्यनेन–वसन्तविजृम्भणसूचिका आम्राणां मञ्जरी यावत्समग्रं न निर्गच्छति तावदेव प्रवासः समापनीय इति पथिकं प्रत्यभिव्यजते। कामः किल विलासिनां राजा। तदाज्ञप्ते विलाससमये यः किल प्रवासमाचरति, स हि राजविरुद्धमाचरतीव। अत एव प्रवासं गच्छतः पथिकस्य भयमिति तात्पर्यम्। राजत्वसूचनेन विलासिषु कामदेवस्य प्रभुत्वं ध्वन्यते।

आताम्रविसरदनलज्वालावलिदीपिते वनाऽऽभोगे ।
किंशुकवनमिति मत्वा निष्क्रामति मुग्धहरिणो न ॥२६॥

आताम्रा अत्यन्तं रक्तवर्णा, प्रसरन्ती, या अनलज्वालावलिः

---

राअविरुद्धं व कहं पहिओ पहिअस्स साहइ ससङ्कम् ।
जत्तो अम्बाणँ दलं तत्तो दरणिग्गअं किं पि ॥ २५ ॥
( राजविरुद्धामिव कथां पथिकः पथिकस्य कथयति सशङ्कम् ।
यत आम्राणां दलं तत ईषन्निर्गतं किमपि ॥ )

(अग्निशिखानां श्रेणिः) तया दीपिते प्रज्वलिते वनप्रान्तरे। किंशुकवृक्षाणामिदं वनमिति मत्वा मुग्धो हरिणो न निर्गच्छति। रक्तवर्णाभिर्वह्निशिखाभिर्व्याप्तं वनं रक्तवर्णैः किंशुकवृक्षैर्वलयितं मत्वा मुग्धस्य हरिणस्य भ्रमो जात इत्याशयः। सहृदयानां मनुष्याणां का कथा, पशूनां हरिणानामपि हृदये वसन्तस्य तावान्प्रभावो व्याप्तो यत्—तत्प्रभावमुग्धः सोयं हरिणो वनाग्निदीपितमरण्यमपि किंशुकव्याप्तं मन्यते। तथा च वसन्तस्य दुर्लंघ्यः प्रभावो ध्वन्यते।

क्षेमं कुह भोः क्षेमं योऽसौ कुब्जाम्रको गृहद्वारे।
तस्य किल मौलिदेशात्कश्चिदनर्थः समुत्पन्नः ॥ २७ ॥

कुह कुत्र। क्षेमं कुशलं कुत्रास्ति भोः क्षेमम्। नाधुना कुशलमित्यर्थः। 'क्षेमं कुत्र क्षेमम्' इति वाक्यशैली 'मुहाविरा'। यथा—तव* इयद्धनं क्वास्ति धनम्? अतिशयसूचनं प्रयोजनम्। कथं क्षेमं नास्ति

---

तम्मिरपसरिअहुअवहजालालिपलीविए वणाहोए।
किंसुअवणंति कलिऊण मुद्धहरिणो ण णिक्कमइ॥ २६॥
(ताम्रवर्णप्रसृतहुतवहज्वालावलिप्रदीपिते वनाभोगे।
किंशुकवनमिति कलयित्वा मुग्धहरिणो न निष्क्रामति॥)
खेमं कन्तो खेमं जो सो खुज्जम्बओ घरद्दारे।
तस्स किल मत्थआओ को वि अणत्थो समुप्पण्णो ॥२७॥
(क्षेमं कुतः क्षेमं योऽसौ कुब्जाम्रको गृहद्वारे।
तस्य किल मस्तकात्कोऽप्यनर्थः समुत्पन्नः॥)

---

* 'तुम्हारे पास इतना धन कहां है धन?, यहां धन का विशेषतः अभाव सूचन करने के लिये यह प्रयोग है।

तदाह—गृहद्वारे योसौ कुब्जाकारः स्वल्प आम्रवृक्षोस्ति तस्यापि शिरोभागात् कश्चित् अनर्थः समुत्पन्नः, अङ्कुरो ( मुकुलः ) निर्गत इत्यर्थः । रसालवृक्षान्कुसुमयन् वसन्तकालः संप्राप्त इति सूच्यते । ‘ अधुना मादृशीनां विरहिणीनां कुशलं क ’ इति सख्याः कुशलप्रश्नस्योत्तरं विरहिण्या दत्तमिति बोध्यम् । ‘आम्रकः’ इति कुत्सितार्थे कन् प्रत्ययः । तथा च कुत्सितानामपि आम्राणां नवमुकुलैरियं दशा, तर्हि समन्तान्मञ्जरितान् रसालपुञ्जान् दृष्ट्वा काऽग्रे दशा स्यादिति सूच्यते । नायं मुकुलः, किन्त्वस्मादृशानां कृते अनर्थः इति आम्रमुकुलानामुद्दीपकत्वातिशयो ध्वन्यते ।

विरुदन्तीवाऽरण्ये दुःसहरविरश्मिसंतप्ताः ।
अतितारझिल्लिविरुतैर्महीरुहो ग्रीष्ममध्याह्ने ॥ २८ ॥

ग्रीष्मर्तोर्मध्याह्ने दुःसहाभिः सूर्यरश्मिभिः ( किरणैः ) संतप्ताः महीरुहः वृक्षाः अपि अतितारैः ( अत्युच्चैः ) झिल्लीनाम् ( ‘झींगुर’ ) विरुतैः शब्दैः रुदन्ति इव । मध्याह्ने झिल्लीनां शब्दो नास्ति, किन्तु सूर्यतापसंतप्ता इमे वृक्षा यद् रुदन्ति तेषामेवाऽयं शब्द इत्याशयः । अरण्ये इत्यनेन—अरण्यस्थानामपि यदेयं दशा तर्हि नगरवासिनां का दशा स्यादिति सूच्यते । वृक्षा रुदन्तीत्यनेन—अचेतना अपि साम्प्रतमेवंदशाः

---

रोवन्ति व्व अरण्णे दूसहरइकिरणफंससंतत्ता ।
अइतारझिल्लिविरुएहिँ पाअवा गिम्हमज्झण्हे ॥२८॥

( रुदन्तीवारण्ये दुःसहरविकिरणस्पर्शसंतप्ताः ।
अतितारझिल्लीविरुतैः पादपा ग्रीष्ममध्याह्ने ॥ )

संजातास्तर्हि चेतनानां नु किं वक्तव्यमिति सांप्रतं प्रवासो न कर्तव्य इति नायकं प्रति सखी सूचयति ।

गिरिनिर्झर इति भुजगं संतप्तो लेढि जिह्वया महिषः ।
कृष्णप्रस्तरझर इति सर्पो महिषस्य पिबति किल लालाम् २९

घर्मात् संतप्तो महिषः, गिरिनिर्झरः पर्वतस्य अयं निर्झर इति भ्रान्त्या सर्पं लेढि जिह्वया आस्वादयति । सर्पः ( अपि ) कृष्णप्रस्तरस्य अयं झरः निःस्पन्द इति भ्रमेण महिषस्य लालां मुखस्यन्दं पिबति । ग्रीष्मसंतापाद् बहिर्निर्गच्छति सर्पे घर्मव्याकुलस्य महिषस्य पर्वतनिर्गत-स्रोतोबुद्धिः । एवं महिषे सर्पस्यापि कृष्णपाषाणभ्रान्तिरिति भावः । स्वतःसंभविनाऽनेन भ्रमेण महिषसर्पयोर्द्वयोरपि व्याकुलत्वं सूच्यते । तेन च ग्रीष्मस्य भीषणदुःसहत्वं ध्वन्यते ।

सायं समये तरुषु रात्रिसंस्थानं लिप्समानानां पक्षिणामविकलं स्वभाववर्णनम्—

भरनमितनीलशाखाग्रचलितचरणार्द्धविधुतपक्षपुटाः ।
तरुशिखरेषु विहङ्गाः संस्थानं हन्त कथमपि लभन्ते ॥३०॥

स्वशरीरभरेण नमितात् नीलशाखाग्रभागात् चलितं विस्खलितं

---

गिरिसोत्तो त्ति भुअंगं महिसो जीहइ लिहइ संतत्तो ।
महिसस्स कह्णवत्थरझरो त्ति सप्पो पिअइ लालम् ॥२९॥

( गिरिस्रोत इति भुजङ्गं महिषो जिह्वया लेढि संतप्तः ।
महिषस्य कृष्णप्रस्तरझर इति सर्पः पिबति लालाम् ॥ )



चरणार्द्धं येषां ते । अत एव विधुतौ कम्पितौ पक्षपुटौ यैस्ते । पूर्वं बहुव्रीहिस्ततः कर्मधारयसमासः । एवमवस्थाः, विहङ्गाः पक्षिणः तरूणां शिखरेषु उपरिभागेषु कथमपि संस्थितिं लभन्ते प्राप्नुवन्ति । नीलेतिशाखाविशेषणेन तासाम् आर्द्रतया स्निग्धत्वं सूच्यते । अत एव पक्षिणां पदस्खलनमिति भावः । अथ भावः—सायंसमये तरुषु रात्रिनिवासं वाञ्छन्तः ( अत एव दूरत उड्डीयागताः ) पक्षिणः संमुखलब्धेषु लघुशाखाग्रभागेषु पूर्वं स्थातुमिच्छन्ति । तानि च अग्राणि तेषां भारतोऽवनमन्ति। अत एव ईषदवस्थापितं तेषामग्रतनं चरणार्द्धं स्निग्धेभ्यः शाखाग्रेभ्यो विस्खलति । ततश्च पतन्तस्ते पक्षपुटं विधुवन्त पुनस्तत्र स्थातुं प्रयतन्ते । एवं कथमपि तेषु संस्थितिं लभन्ते इति ।

स्वाभाविकप्रेमवर्णनम्—

विपिनात्तृणमथ विपिनात्पानीयं सर्वतः स्वयंग्राह्यम् ।
हरिणानां हरिणीनां तथापि च प्रेम मरणान्तम् ॥३१॥

विपिनात् वनात् तृणम्, अथ विपिनादेव पानीयं ( जलम् )

---

भरणमिअणीलसाहग्गखलिअचलणद्धविहुअवक्खउडा ।
तरुसिहरेसु विहंगा कहँ कहँ वि लहन्ति संठाणम् ॥ ३० ॥

( भरनमितनीलशाखाग्रस्खलितचरणार्द्धविधुतपक्षपुटाः ।
तरुशिखरेषु विहङ्गाः कथं कथमपि लभन्ते संस्थानम् ॥ )

रण्णाउ तणं रण्णाउ पाणिअं सव्वअ सअंगाहम्
तह वि मआणँ मईणँ अ आमरणान्ताइँ पेम्माइं ॥३१॥

( अरण्यात्तृणमरण्यात्पानीयं सर्वतः स्वयंग्राह्यम् ।
तथापि मृगाणां मगीणां च मरणान्तानि प्रेमाणि ॥ )

सर्वत्रापि स्थाने स्वयंप्राप्यमस्ति । एवं परस्परोपकारकरणाभावेपि हरिण-हरिणीनां प्रेम आजन्मस्थायि भवति । मनुष्येषु—पुरुषः स्त्रिया भरण-पोषणादिकं करोति । पुरुषस्य शरीराद्यसामर्थ्ये च स्त्री तदर्थं पानभोजना-दिकमुपनयति । एवं सति परस्परोपकारजनितस्तयोः सोयं प्रेमा कदाचिदौ-पाधिकोऽपि परिगण्येत । परमीश्वरदत्ततृणपानीयादिना जीवन्तोपि मृग-मृग्यादयो निर्निमित्तमेव तथा प्रेम कुर्वन्ति यथा तत्प्रेमजीवनसमाप्तावेव प्रतिबध्यते, न विघ्नैः, इति मरणान्तमिति पदेन ध्वन्यते ।

अन्योन्यरक्षणाय प्रहारसंमुखकुरङ्गमिथुने हि ।
व्याधेन मन्युविगलद्बाष्पविधौतं धनुर्मुक्तम् ॥ ३२ ॥

परस्परस्य रक्षणाय प्रहारस्य संमुखे हरिणमिथुने । मन्युना कारुण्येन विगलन् यो बाष्पस्तेन विधौतं प्रक्षालितं धनुः व्याधेन मुक्तं त्यक्तम् । अयं भावः—व्याधेन मृगद्वन्द्वं प्रति प्रहाराय यदा धनुषि बाणः संधानार्थं स्थापितस्तदा परस्परस्य रक्षणार्थं मृगद्वन्द्वे पर्यायेण लक्ष्यसं-मुखे सति [ यदा मृगे प्रहाराय संधानं कृतं तदा पतिरक्षणार्थं मृगी प्रहारस्य संमुखस्थिताऽभूत् । यदा स्वयं संमुखमागतायां मृग्यां लक्ष्यं बद्धं तदा तद्रक्षणार्थं मृगः प्रहारस्य संमुखेऽवातिष्ठत् इति ] एवमनयो-रन्योन्यानुरागमवलोक्य उत्पन्नकारुण्येन व्याधेन हिंसकं तद् धनुरेव

---

एक्कक्कमपरिरक्खणपहारसँमुहे कुरङ्गमिहुणम्मि ।
वाहेण मण्णुविअलन्तवाहधोअं धणुं मुक्कम् ॥ ३३ ॥

[ अन्योन्यपरिरक्षणप्रहारसंमुखे कुरङ्गमिथुने ।
व्याधेन मन्युविगलद्बाष्पधौतं धनुर्मुक्तम् ॥ ]



त्यक्तमिति । 'बाष्पैः आर्द्रम्' इति वक्तव्ये विधौतमित्युक्त्या कारुण्यजनितेनाश्रुणा तत् सिक्तमेव न, किन्तु पशुवधपापपङ्किलं तद्धनुस्तद्दिने प्रक्षालितकल्मषतया पवित्रमिवाऽभूदिति ध्वन्यते । मुक्तमिति पदेन—तद्दिनादारभ्य पशुवधपातकितमपि—संसारे तत्कर्मतो मुक्तं मुक्तिं गतमभूदिति धनुष उत्कर्षः सूच्यते । प्रेम-कारुण्यविषयिणी अनुपमा सूक्तिरिति सुधीभिः समालोच्यम् ।



[ २ ]

अकुलीनोऽथ द्विमुखस्तावन्मधुरोऽन्नमानने यावत् ।
जीर्णेऽन्ने तु मुरज इव पिशुनो बत बिरसमारसति ॥ ३३ ॥

अकुलीनः ( न कुलीन. ) असत्कुलजातः । द्विमुखः, समक्षे अन्यद्वचनम्, परोक्षे चाऽन्यद्वचनमिति वचनभेदेन द्विजिह्वतया द्विमुखः । पिशुनः खलः मुरज इव मृदङ्ग इव तावन्मधुरो यावन् मुखे अन्न भोजनं भवति । भोजने जीर्णे पक्वे तु विरसम् अप्रियम् आरसति वदति, निन्दतीत्यर्थः । मृदङ्गः ( वाद्यविशेषः ) अपि कौ पृथिव्यां न लीनः,

---

अउलीणो दोमुहओ ता महुरो भोअणं मुहे जाव ।
मुरओ व्व खलो जिण्णम्मि भोअणे विरसमारसइ ॥ ३३ ॥

( अकुलीनो द्विमुखस्तावन्मधुरो भोजनं मुखे यावत् ।
मुरज इव खलो जीर्णे भोजने विरसमारसति ॥ )

मृदङ्गस्य नतोन्नतत्वेन आलवालीकृतवस्त्रोपर्येव स्थापनात्। द्विमुखः उभयमुखः, उभयतो वाद्यढक्कासत्त्वात् । एवंविधो मुरजोपि यावन्मुखे अन्नं पिष्ट-(चूर्ण-)-लेपो भवति तावदेव मधुरः मधुरनादेन श्रुतिसुखावहो भवति। पिष्टलेपे जीर्णे अर्थात् शुष्कतया समाहरणोचिते जाते, विरसं नीरसम् अप्रियं यथा स्यात्तथा आरसति शब्दं करोति। मृदङ्गस्य मुखे यावत्कालं चूर्णलेपः सरसस्तिष्ठति तावदेव स मधुरं ध्वनति, एवमेव दुर्जनस्य मुखे यावत्कालं भोजनं तिष्ठति तावदेव प्रशंसां चाटुवचनानि च जल्पति, अनन्तरं तु निन्दां करोतीत्याशयः। 'आनने यावदन्नं तावन्मधुरः' इत्यत्र आनने इति सप्तम्या 'अन्नस्य आननस्य च परस्पर-संबन्धे सत्येव अर्थात् भुञ्जानदशायामेव स चाटूनि कुरुते' इत्यर्थ-सूचनेन पिशुनस्य अत्यन्तं स्वार्थपरता व्यज्यते। 'अकुलीनः' इत्यनेन 'सत्कुलजाता न स्वार्थमात्रैकमित्राणि भवन्ति' इति सूच्यते। प्राकृतोक्तभोजनपदापेक्षया अन्नपदं मुरजपक्षेपि कियदर्थसमर्पकमिति मार्मिकैर्विमर्शनीयम्।

सोऽर्थो यो निजहस्ते तन्मित्रं यन्निरन्तरं व्यसने।
तद्रूपं यत्र गुणास्तद्विज्ञानं च यत्र धर्मः स्यात् ॥ ३४ ॥

सः अर्थः धनमस्ति यः स्वस्य हस्ते, यद्धि परहस्तगतं न तद्धन-

---

सो अत्थो जो हत्थे तं मित्तं जं णिरन्तरं वसणे।
तं रूअं जत्थ गुणा तं विण्णाणं जहिं धम्मो ॥ ३४ ॥

(सोऽर्थो यो हस्ते तन्मित्रं यन्निरन्तरं व्यसने।
तद्रूपं यत्र गुणास्तद्विज्ञानं यत्र धर्मः ॥)

मित्यर्थः । तदेव मित्रम् यत् व्यसने विपदि निरन्तरम् आनन्तर्येण (व्यवधानेन) शून्यम्, सर्वदा सहचरमित्यर्थः । तदेव रूपं यत्र विनयोपकारादयो गुणाः स्युः, गुणशून्यं बाह्यसौन्दर्यमात्रं तु न रूपमित्यर्थः । तदेव विज्ञानम् ( लोकशास्त्रादिषु बहुज्ञता ) अस्ति यद्धि धर्मरहितं नास्तीत्याशयः ।

शैलोन्नतमपि पुरुषं लघु विलघयतो हि कार्ये द्वे ।
निर्वरणमनिर्व्यूढे निर्व्यूढे यच्च निर्वरणम् ॥ ३५ ॥

अनिर्व्यूढे अकृते कार्ये निर्वरणं कथनम्, आत्मगुणप्रकाशनार्थमिति भावः । निर्व्यूढे कृते च कार्ये निर्वरणम् आत्मश्लाघार्थं निवेदनम्, एते द्वे अपि कार्ये पर्वतवत् उन्नतमपि पुरुषं लघु शीघ्रं लघयतः लघूकुरुतः । अकृतकार्यस्य व्यर्थमेव कथनम्, कृते च कार्ये स्वमुखेन स्वश्लाघाहेतुकं नोचितं तत्कथनमित्युभयोः कार्ययोर्लाघवकरत्वमुचितमेवेत्याशयः ।

क्रियमाणैव विनश्यत्युदके रेखेव खलजने मैत्री ।
सुजने कृता तु सा पुनरनघा पाषाणरेखेव ॥ ३६ ॥

उदके जले क्रियमाणा विधीयमाना रेखेव दुष्टजने मैत्री क्रियमा-

---

लहुअन्ति लहुं पुरिसं पव्वअमेत्तं पि दो वि कज्जाइं ।
णिव्वरणमणिव्वूढे णिव्वूढे जं अ णिव्वरणम् ॥ ३५ ॥

( लघयतो लघु पुरुषं पर्वतमात्रमपि द्वे अपि कार्ये ।
निर्वरणमनिर्व्यूढे निर्व्यूढे यच्च निर्वरणम् ।

णैव विनश्यति । सुजने कृता तु सा मैत्री पाषाणे कृता रेखा इव अनघा निरपाया, कालान्तरेऽपि नाशायोग्या भवतीत्यर्थः । 'क्रियमाणा' इति वर्तमानकालार्थकशानच्प्रत्ययेन—"खलजने कृता मैत्री यावत्पर्यन्तं पूर्णापि न सिध्यति ततः पूर्वमेव खलस्य दौरात्म्येन भज्यते" इति व्यज्यते । 'पाषाणस्य रेखा' 'पत्थर की लकीर' इति लौकिकप्रवादस्य कियन्माधुर्येण निर्वाह इति सुधीभिरालोच्यम् ।

उन्नतमेव मनः स्यान्मनस्विनो ह्यन्तिमास्वपि दशासु ।
किरणाः स्फुरन्ति संततमस्तमनेऽप्यूर्ध्वमेव रवेः ॥ ३७ ॥

अन्तिमासु मरणान्तिकासु अपि दशासु मनस्विनो धीरपुरुषस्य मनः उन्नतमेव भवति । अस्तंगमनेऽपि सूर्यस्य किरणाः नित्यम् ऊर्ध्वमेव स्फुरन्ति गच्छन्ति, नाऽधः । सूर्यकिरणानामूर्ध्वगामित्वं यथा स्वाभाविकं तथा मनस्विमानसस्योदारत्वमपि स्वाभाविकमिति सूर्यदृष्टान्तेन मनस्विनो महिमातिशयो ध्वन्यते ।

---

कीरन्ती च्चिअ णासइ उअए रेह व्व खलअणे मेत्ती ।
सा उण सुअणम्मि कआ अणहा पाहाणरेह व्व ॥ ३६ ॥
( क्रियमाणैव नश्यत्युदके रेखेव खलजने मैत्री ।
सा पुनः सुजने कृता अनघा पाषाणरेखेव ॥ )

तुङ्गो च्चिअ होइ मणो मणंसिणो अन्तिमासु वि दसासु ।
अत्थमणम्मि वि रइणो किरणा उद्धं चिअ फुरन्ति ॥३७॥
( तुङ्गमेव भवति मनो मनस्विनोऽन्तिमास्वपि दशासु ।
अस्तमनेऽपि रवेः किरणा ऊर्ध्वमेव गच्छन्ति ॥ )

वदनात्सुजनस्य कुतोऽप्रियं सुदृढरोषकलुषितस्यापि ।
राहुमुखेपि हि शशिनः किरणाः पोयूषमेव मुञ्चन्ति ॥ ३८ ॥

सुदृढरोषेण कलुषितस्य दुर्मनायितस्यापि सुजनस्य मुखात् । अप्रियं परमर्मवेधकं वचनं कुतः ? नैवेति काका सूच्यते । राहुमुखेऽपी-त्यनेन—वैरिणा सुभृशमाक्रान्तोपि शीतभानुर्यथाऽमृतमेव वर्षति न गरलम्, तथैव दुर्जनैः खेदितोपि सुजनो निजस्वभावसिद्धं हितमेवाऽऽच-रति नाऽप्रियमिति औदार्यातिशयो ध्वन्यते । राहुदृष्टान्तेन—सर्वथा ग्रासेऽपि सज्जनः स्वभावं न मुञ्चतीति व्यज्यते ।

अविनिर्गतानि कलहान्तरेऽपि हृदये जरामुपेतानि ।
सुजनश्रुतानि दहनो दहति रहस्यानि चायुषः पूर्तौ ॥ ३९ ॥

कलहान्तरेऽपि कलहमध्येपि अविनिर्गतानि मुखाद्बहिरनिः-

---

दढरोसकलुसिअस्स वि सुअणस्स मुहाहि विप्पिअं कन्तो ।
राहुमुहम्मि वि ससिणो किरणा अमअं विअ मुअन्ति ॥३८॥
( दृढरोषकलुषितस्यापि सुजनस्य मुखादप्रियं कुतः ।
राहुमुखेपि शशिनः किरणा अमृतमेव मुञ्चन्ति ॥ )

कलहन्तरे वि अविणिग्गआइँ हिअअम्मि जरमुवगआइं ।
सुअणकआइँ रहस्साइँ डहइ आउक्खए अग्गी ॥ ३९ ॥
( कलहान्तरेप्यविनिर्गतानि हृदये जरामुपेतानि ।
सुजनश्रुतानि रहस्यानि दहत्यायुःक्षयेऽग्निः ॥ )

सृतानि । हृदये जराम् उपेतानि बहुकालं स्थितानि । सुजनेन श्रुतानि रहस्यानि गोप्यवृत्तानि आयुषः क्षये अग्निर्दहति, न पुनरन्यस्मिन् संक्रामन्तीति भावः । हृदये जरामुपेतानीत्यनेन—सुजनः परस्य रहस्यानि स्वयमपि पुनःस्मरणेन नावर्तयति, किन्तु स्वयमेव तानि शनैः शनैर्मन्दीभूतानि भवन्तीति सौजन्यातिशयो ध्वन्यते । दहनो दहतीत्यनेन 'दहनः' उग्रोपि पुरुषो बलप्रयोग-भयदर्शनादिभिर्न तानि बहिष्कर्तुं प्रभुः, सोपि दग्धुमेव समर्थो न श्रोतुमिति ध्वन्यते ।

अवमानितोपि सुजनो विभवविहीनोपि दूयते न तथा ।
असमर्थः प्रतिकर्तुं यथा परैर्मान्यमानो हि ॥ ४० ॥

धनादिवैभवरहितोपि तथा अवमानितोपि लोकैस्तिरस्कृतः अपि सुजनस्तथा न व्यथते यथा प्रतिकर्तुं प्रत्युपकारं कर्तुं असमर्थः अन्यैर्जनैः मान्यमानः धनदानादिना संमान्यमानः सन् व्यथते । प्रत्युपकारं विना अन्यैः कृतेन संमानेन महतीं मनोव्यथामनुभवतीति भावः । अवमानितोपि, विभवविहीनोपि, इति अपिपदाभ्याम् ' अवमानो वैभवहीनता च यद्यपि लोकानां चित्तं संतापयतः, परं सज्जनस्तदेतद्दुःखद्वयमपि प्रत्युपकाराऽसामर्थ्ये सति अन्यजनैः कृतस्य संमानस्याग्रे न किञ्चिद् गणयतीति सूचनेन प्रत्युपकाराऽसमर्थतायां परसंमानस्याऽत्यन्तं भाराऽऽवहत्वं

---

अवमाणिओ वि ण तहा दुम्मिज्जइ सज्जणो विहवहीणो ।
पडिकाउं असमत्थो माणिज्जन्तो जह परेण ॥ ४० ॥

( अवमानितोपि न तथा दूयते सज्जनो विभवहीनः ।
प्रतिकर्तुमसमर्थो मान्यमानो यथा परेण ॥ )

ध्वन्यते । ' तथा न दूयते ' इति तथापदेन अन्यव्यथानामपेक्षया सेयं व्यथा अधिकसंतापकारिणीत्यतिशयो द्योत्यते ।

**चापः स्वभावसरलं क्षिपति शरं किल गुणेपि निपतन्तम् ।**
**ऋजुकस्य च वक्रस्य च सम्बन्धः किं चिरं भवति ॥ ४१ ॥**

चापो धनुः स्वभावेन सरलम् अवक्रम् (' सीधा ') गुणे प्रत्यञ्चा-यां निपतन्तम् अपि संबध्यमानमपि शरं बाणं क्षिपति दूरं निपातयति । एतत्समर्थनायार्थान्तरन्यासमाह—ऋजुकस्य ( सरलस्य ) वक्रस्य च संबन्धः किं चिरकालं यावद्भवति ? अपि तु नेत्यर्थः । एवं च—स्वभा-वेन सरलं निष्कपटम्, गुणे विद्याविनयादौ निपतन्तम् अनुरागेणाऽभि-मुखीभवन्तमपि ऋजुकं जनं कुटिलो दूरं परिहरतीति श्लेषेण प्रस्तुतोऽर्थः । चिरमितिपदेन—यदि संबन्धो भवेत्तदापि न स स्थायी, अपि तु स्वल्प-कालार्थमेवेति सूच्यते ।

**सदसद्दुःखं च सुखं गृहस्य या जानते नूनम् ।**
**ताः सन्ति पुत्र महिलाः शेषा हि जरा मनुष्याणाम् ॥४२॥**

या महिलाः गृहस्य गृहवर्तिनां जनानां, सत् कीर्तिकरम् असत् निन्दाकरं च, तथा सुखं दुःखं च, जानन्ति ता एव महिलाः महिला-

---

चावो सहावसरलं विच्छिवइ सरं गुणम्मि वि पडन्तम् ।
वङ्कस्स उज्जुअस्स अ संबन्धो किं चिरं होइ ॥ ४१ ॥

( चापः स्वभावसरलं विक्षिपति शरं गुणेपि पतन्तम् ।
वक्रस्य ऋजुकस्य च संबन्धः किं चिरं भवति ॥ )

पदवाच्या:, अर्थात् गृहिणीपदाधिकारिण्य: । अन्यास्तु वय:क्षयकरत्वात् जरा एव । शरीरसंबद्धा शनै: शनै: शरीरक्षयकारिण्यपि जरा यथा त्यक्तुं न शक्यते तथा कुलस्य अपकीर्तिम् विचार्य यद्यपि सापि ( सदसदनभिज्ञा वधू: ) त्यक्तुं न शक्यते, अथापि प्रतिक्षणं नाशकारिणीति भावनया अवधीर्यत एवेति जरा-रूपकेण ध्वन्यते । गृहस्येत्युक्त्या–न केवलं गृहपते:, नापि वा एकस्य द्वयोर्वा पुरुषयो: सुखदुःखादिविचारो गृहवधूध्वायत्त:, अपि तु गृहवर्तिनां संपूर्णजनानामेवेति भारातिशयो द्योत्यते । वयोज्येष्ठाया: कस्याश्चित्पुरन्ध्रया: शिक्ष्यमाणप्रत्युपदेशोक्तिरियम् । तथा च पुत्रेति पदेन–त्वं मे स्नेहपात्रमिति हितबुद्धया तदिदं रहस्यं बोध्यसे इति स्वस्योपदेशार्हत्वं व्यज्यते । ' सद् विद्यमानम् । असत् अविद्यमानं वस्तु ' इति गङ्गाधरटीका ।

जिह्वायां कलयन्ति प्रियं हृदि च सन्ति निर्वृतिं कर्तुम् ।
जनयन्ति पोडिता अपि रसमिक्षुघनाः कुलीनाश्च ॥४३॥

इक्षुघना: घना: सान्द्रा इक्षव: ( पुण्ड्रका: ) मधुरसात् जिह्वायां प्रियम् ( इष्टम् आस्वादम् ) कलयन्ति जनयन्ति । कुलीना: सत्कुलजा: सज्जनाश्च जिह्वायां प्रियम् ( परस्य अनुकूलम् ) मनोरथं जनयन्ति, वचनेन परस्य हितं संपादयन्तीत्यर्थ: । इक्षव: हृदये निर्वृतिम् ऊष्मजनि-

---

सन्तमसन्तं दुक्खं सुहं च जाओ घरस्स जाणन्ति ।
ता पुत्तअ महिलाओ सेसाओ जरा मनुस्साणम् ॥ ४२ ॥

( सदसद्दु:खं सुखं च या गृहस्य जानन्ति ।
ता: पुत्रक महिला: शेषा जरा मनुष्याणाम् ॥ )

ततापस्य प्रशमेन सुखं कर्तुं सन्ति ( भवन्ति ) प्रभवन्ति । सज्जनाश्च सूक्तिभिः उद्वेगस्य प्रशमे न सुखं कर्तुं प्रभवन्ति । इक्षवः पीडिताः अपि दन्तैर्निष्पीडिता अपि रसं मधुरं द्रवं जनयन्ति । कुलीनाश्च पीडिताः अपि निष्ठुरभाषणेन खेदिता अपि रसं प्रीतिं जनयन्ति । प्राकृते 'जीहाइ' इत्यस्य 'जिह्वायाम्' 'जिह्वया' चेत्युभयमप्यर्थः । कुलीनपक्षे 'जिह्वया' इति योजयन्ति । संस्कृते तदिदमसाध्यम् ।

खलसङ्गो मे परिणतिकाले कथमिव भवेदिति ध्यायन् ।
अवनतमुखः सशूकः शालिः किल रोदितीव नीहारैः ॥४४॥

परिणतिकाले वयःपरिणामकाले खलस्य दुर्जनस्य सङ्गः मे कथमिव ( कीदृशदुःखावहः ) भवेत् इति चिन्तां कुर्वन्, अवनतमुखः शोकेन अवनतवदनः, सशूक कण्टकायितेन शोकेन सहितः यथा कश्चिन्मनुष्यो रोदिति, तथा—परिणतिकाले पक्वतादशायां खलस्य

---

जीहाइ कुणन्ति पिअं भवन्ति हिअअम्मि णिव्वुइं काउम् ।
पीडिज्जन्ता वि रसं जणन्ति उच्छू कुलीणा अ ॥ ४३ ॥

( जिह्वायाम् (पक्षे-जिह्वया) कुर्वन्ति प्रियं भवन्ति हृदये निर्वृतिं कर्तुम् ।
पीड्यमाना अपि रसं जनयन्तीक्षवः कुलीनाश्च ॥ )

कहँ मे परिणइआले खलसङ्गो होहि इत्ति चिन्तन्तो ।
ओणअमुहो ससूओ रुवइ व साली तुसारेण ॥ ४४ ॥

( कथं मे परिणतिकाले खलसङ्गो भविष्यतीति चिन्तयन् ।
अवनतमुखः सशूको रोदितीव शालिस्तुषारेण ॥ )

धान्यमर्दनस्थानस्य ( ' खलिहान ' ) सङ्गः कथमिव भवेदिति ध्यायन्, अवनतमुखः परिपाकगुरुतया अवनतं मुखं शीर्षाग्रं यस्य सः, सशूकः शूकेन धान्यकण्टकेन सहितः शालिः सतुषस्तण्डुलः नीहारैः तुषारव्याजेन रोदिति इव । अचेतनः शालिरपि परिणामे खलसङ्गेन रोदिति तर्हि सहृदयानां का दशा स्यात् । अत एव तत्सङ्गः परिहर्तव्य इति व्यज्यते ।

ये ये गुणिनो ये ये च दानिनो ये विदग्धविज्ञानाः ।
दारिद्र्य रे विचक्षण तेषां त्वं सानुरागमसि ॥ ४५ ॥

ये गुणिनः गुणयुक्ताः ( दान-वैदग्ध्येभ्योऽन्यगुणयुक्ताः ) ये दानशीलाः, ये च विदग्धविज्ञानाः विदग्धं निपुणं विज्ञानं येषाम्, विज्ञाने निपुणा इति यावत् । अनेन तेषां सर्वतोमुखं वैदग्ध्यमित्यतिशयो ध्वन्यते । अथवा विदग्धाश्च विज्ञानाश्चेति द्वन्द्वः । विदग्धाश्चतुराः । ( विज्ञानाः विशिष्टं ज्ञानं येषाम्, विशिष्टा विद्वांस इत्यर्थः ) । हे विचक्षण चतुर ! दारिद्र्य ! तेषां जनानां त्वं प्रीतियुक्तमसि । निर्गुणान् विहाय गुणिष्वनुरज्यसीति स्पष्टं ते चातुर्यमिति भावः । तान् पीडयसीति वक्तव्ये, सानुरागमसीत्युक्त्या—' अनुरक्तो यथा कश्चित्पुरुषमाश्रयन् प्रेमवशान्न पीडयति तथा त्वमपि तेषां तादृशं क्लेशं नोत्पादयसि येन ते विरज्येयुः, अत एव तैः साकं तव सङ्गो निर्व्यूढो भवतीति सूच्यते । तथा च—गुणिनो

---

जे जे गुणिणो जे जे अ चाइणो जे विडड्ढविण्णाणा ।
दारिद्द रे विअक्खण ताणँ तुमं साणुराओ सि ॥ ४५ ॥

( ये ये गुणिनो ये ये च त्यागिनो ये विदग्धविज्ञानाः ।
दारिद्र्य रे विचक्षण तेषां त्वं सानुरागमसि ॥ )

दारिद्र्येपि प्रसन्ना एव तिष्ठन्ति, नात्मावसादं गच्छन्तीति तेषां मनस्विताऽतिशयो ध्वन्यते। 'विचक्षण!' इति सुभगं संबोध्य 'रे' इति नीचसंबोधनेन—वास्तवेन अधममपि त्वं गुणिजनानुरागवशात्प्रशस्यमिवाऽसीति निन्दाप्रशंसयोः सांकर्यं सूच्यते।

**बधिरान्धाः किल धन्यास्त एव जीवन्ति मानुषे लोके।**
**शृण्वन्ति न पिशुनवचः पश्यन्ति न ये च खलसमृद्धिमपि ।४६।**

बधिरान्धाः—बधिराश्च अन्धाश्च। बधिरा. पिशुनानां दुर्जनानां वचनं न शृण्वन्ति, अन्धाश्च खलानां समृद्धिं न पश्यन्ति, अतः ते एव जीवन्ति। जीवनमत्र सफलजीवनरूपे अर्थान्तरे संक्रमितम्। तथा च—तेषामेवास्मिन् लोके जीवनं सफलम्, पदे पदे दुर्जनवचनैर्मर्मसु अभिहन्यमानानां नाऽस्मदादीनामिति वक्तुर्निर्वेदो ध्वन्यते। मानुषे लोके इत्युक्त्या—दिव्यलोकादिषु तु दुर्जनवचनश्रवणानवसरात्प्रशस्यं जीवनं भवेदिति—दुर्जनवचनाऽदग्धकर्णानां दिव्यजनसाम्यं युक्त्वा ध्वन्यते। बधिरान्धाः धन्या इत्युक्त्या—पिशुनवचनसूचिसंचयैः अनवरतं विध्यमानश्रवणस्य मे बधिरादीनामपेक्षयापि गर्हणीयं जीवनमिति वक्तुः स्वात्मनि निर्वेदातिशयो व्यज्यते।

---

धण्णा बहिरा अन्धा ते च्चिअ जीअन्ति माणुसे लोए।
ण सुणन्ति पिसुणवअणं खलाणँ ऋद्धिं ण पेक्खन्ति ॥ ४६ ॥

( धन्या बधिरा अन्धास्त एव जीवन्ति मानुषे लोके।
न शृण्वन्ति पिशुनवचनं खलानामृद्धिं न प्रेक्षन्ते ॥ )

ते विरलाः सत्पुरुषाः स्नेहो येषामभिन्नमुखरागः।
अनुदिवसवर्द्धमानः पुत्रेष्वृणमिव हि संक्रामेत् ॥ ४७ ॥

न भिन्नो मन्दीकृतो मुखरागो मुखप्रसादो यत्र अर्थात् स्नेहसूचको मुखवर्णः कदापि न परिवृत्तः, 'मुँह की लाली न हटी' इति हिन्दी। येषां स्नेहः ऋणमिव पुत्रेषु संक्रामेत् अनुगच्छेत् ते सत्पुरुषा विरलाः सन्ति। अन्तेपि न लुप्यते किन्तु उत्तमर्णाय देयम् ऋणं यथा पुत्रेषु संक्रामति अवतरति, तथा स्नेहोपि येषां वंशपरम्परया अनुगच्छतीति सुजनस्नेहस्याक्षयत्वं सूच्यते। पुत्रेषु इति बहुवचनेन 'न एकस्मिन् द्वयोर्वा पुत्रयोः, किन्तु सर्वेषु' इति वंशव्यापकत्वं व्यज्यते। ऋणपदेन— पितृकृतस्य ऋणस्य परिशोधो यथाऽऽवश्यकस्तथा स्नेहनिर्वाहोऽपीति पुत्राणामवश्यकर्तव्यत्वं ध्वन्यते। 'पुत्रेषु अनुवर्तेत; अनुगच्छेत्' इत्याद्यनुक्त्वा 'संक्रामेत्' इति पदेन 'पितरि यः स्नेह आसीत्स एवाऽविकलं पुत्रेषु गच्छेत्' इति सुजनस्नेहस्य अकिंचित्परिवर्तनीयत्वं व्यज्यते। 'अनुदिवसवर्द्धमानः' इत्युक्त्या क्रमक्रमेण वर्द्धमानः स्नेहः स्वाभाविको भवति। सहसैव प्रवृद्धस्तु शीघ्रक्षयीति सूच्यते। उक्तं च— प्रारम्भगुर्वी क्षयिणी क्रमेणेत्यादि।

---

ते विरला सप्पुरिसा जाण सिणेहो अहिण्णमुहराओ।
अणुदिअहवड्ढमाणो रिणं व पुत्तेसु संकमइ ॥ ४७ ॥

( ते विरला सत्पुरुषा येषां स्नेहोऽभिन्नमुखरागः।
अनुदिवसवर्द्धमान ऋणमिव पुत्रेषु संक्रामति ॥ )

यत्रैव पोष्यमाणो वसति खलः स्नेहदानेन ।
दीपक इवाऽचिरेणाऽऽलयं तमेवैष मलिनयति ॥४८॥

स्नेहदानेन स्नेहपूर्वकम् आश्रयदानेन, स्नेहस्य प्रणयस्य दानेन वा । पोष्यमाणः संवर्ध्यमानो दुर्जनः यत्रैव वसति, यदाश्रयेणैव वसति, एष खलस्तमेव आलयम् आश्रयभूतं जनमचिरेणैव अर्थात् पोषणदशायामेव मलिनयति अपवादप्रचारणादिना दूषयतीत्यर्थः । स्नेहस्य तैलस्य दानेन संवर्ध्यमानो दीपकोऽपि आलयं स्वाश्रयभूमिभागमचिरेणैव कज्जलादिभिर्मलिनयतीति द्वयोः साम्यं बोध्यम् ।

भवति कृपणपुरुषस्य प्रभवन्त्यपि निष्फलैव धनवृद्धिः ।
ग्रीष्मातपसंतप्तस्य निजच्छायेव पथिकस्य ॥ ४९ ॥

कृपणस्य लुब्धस्य पुरुषस्य । प्रकर्षेण भवन्त्यपि प्रभूतेत्यर्थः । धनसमृद्धिः, ग्रीष्मघर्मसंतप्तस्य पथिकस्य निजच्छायेव निष्फलैव ।

---

वसइ जहिं चेअ खलो पोसिज्जन्तो सिणेहदाणेहिं ।
तं चेअ आलअं दीअओ व्व अइरेण मइलेइ ॥ ४८ ॥

( वसति यत्रैव खलः पोष्यमाणः स्नेहदानैः ।
तमेवालयं दीपक इवाचिरेण मलिनयति ॥ )

होन्ती वि णिप्फल च्चिअ धणरिद्धी होइ किविणपुरिसस्स ।
गिह्माअवसंतत्तस्स णिअअछाहि व्व पहिअस्स ॥ ४९ ॥

( भवन्त्यपि निष्फलैव धनऋद्धिर्भवति कृपणपुरुषस्य ।
ग्रीष्मातपसंतप्तस्य निजकच्छायेव पथिकस्य )

यथा पथिकस्य स्वीया छाया नाऽऽत्मनो न वा परस्य संतापं हरति तथा कृपणस्य धनमिति भाव: । आतपसंतप्तस्य, अत एव शान्तिं वाञ्छतोपि पथिकस्य यथा स्वच्छायया न सुखोपलब्धिस्तथा स्वधनेनापि न तस्य सुखमित्याशय: । छायोपमया · छायावत्सर्वदा धनेन साकं सहभावेऽपि तत्कृत: सुखाभावो ध्वन्यते । पथिकपदेन— पथिश्रान्ततया अनातपं वाञ्छन्नपि स्वच्छायया सौख्यमलब्ध्वैव पथिको यथा यात्रां समापयति, तथा कृपण: अपेक्षितत्वेपि धनसौख्यमलभमान एव जीवनयात्रां कष्टं समापयतीति ध्वन्यते ।

कुब्जोऽपि जायतां किल निःशाखो गलितपल्लवो विपिने ।
मा मानुषे तु लोके त्यागी रसिको दरिद्रश्च ॥ ५० ॥

वनोद्देशे निशाख: गलितपल्लव: पत्रशाखारहित: । कुब्जो मध्य-कुटिलो लघुवृक्षक एव जायताम्, परं त्यागी दानशील:, रसिक: सानुराग: शृङ्गारी च जनो लोके निर्धनो मा जायतामित्यर्थ: । वने कदाचिदावश्यकतायां कुब्जवृक्ष: काष्ठादिद्वारा निजोपयोगं निर्वहेत्, परं जनसमाजे प्रतिपदं धनावश्यकतायां त्यागिनो रसिकजनस्य च को वा जीवनोपयोग इत्याकूतम् ।

---

जाएज्ज वणुद्देसे कुज्जो वि हु णीसहो झडिअपत्तो ।
मा माणुसम्मि लोए ताई रसिओ दरिद्दो अ ॥ ५० ॥

( जायतां वनोद्देशे कुब्जोपि खलु निःशाख: शिथिलपत्र: ॥ )
मा मानुषे लोके त्यागी रसिको दरिद्रश्च ॥ )

कुप्यत्येव न सुजनो यदि कुप्यति विप्रियं न चिन्तयति ।
यदि चिन्तयति न जल्पति यदि जल्पति लज्जितो भवति ॥५१॥

उन्नतमना: सुजनः कोपमेव न करोति । यदि तु अग्रे पुनरयमेवं न कुर्यादिति शिक्षार्थं कोपं करोति, तथापि तस्य अनिष्टं न चिन्तयति । यदि तु घोराऽपराधे तत् चिन्तयति तथापि मुखान्न कथयति, 'अहमस्य एवं करिष्यामि' इति विकत्थनस्य सुजनचर्याविप्रतीपत्वात्, फलोदयात्पूर्वं कार्यप्रकटनस्य नीतिबाह्यत्वाच्च । अथवा 'कृते प्रतिकृतन्यायेन विप्रियमस्य शिक्षार्थं कर्तव्यमेव । पुनर्जनसमक्षं किमित्यमुं ह्रेपयामि' इति चिन्तयन्न जल्पतीति भावः । सुजनस्य विचारगाम्भीर्यमनेनाभिव्यज्यते । यदि तु जल्पति, रोषावेशवशान्मुखान्निःसारयति, तर्हि रोषापगमे निजस्खलितमनुसंधाय 'स्वयमपि तु जिह्रेति विबुधः' । एकावल्यलंकारः ।

यं जीव्यते विना नोऽनुनीयते स हि कृतापराधोऽपि ।
प्राप्तेऽपि नगरदाहे वद कस्य न वल्लभो वह्निः ॥ ५२ ॥

येन विना जीवितुं न शक्यते, स कृताऽपराधोपि अनुनीयते । सापराधत्वेऽपि तस्यानुनयः क्रियते इत्यर्थः । नगरदाहे कृतेऽपि वह्निः कस्य वल्लभो न ? अपि तु सर्वस्यैव अभीष्टः । नगरदाहेन अनेकेषां

---

सुअणो ण कुप्पइ व्विअ अह कुप्पइ विप्पिअं ण चिन्तेइ ।
अह चिन्तेइ ण जम्पइ अह जम्पइ लज्जिओ होइ ॥ ५१ ॥

( सुजनो न कुप्यत्येव अथ कुप्यति विप्रियं न चिन्तयति ।
अथ चिन्तयति न जल्पति अथ जल्पति लज्जितो भवति ॥ )

कुटुम्बानां सर्वस्वनाशे कृतेपि भोजनाद्यर्थमग्निः पुनः प्रज्वाल्यते । अत एव जीवनाधारभूतः सापराधत्वेऽप्यनुनीयत इति भाव. । तथा च—कृतव्यलीकोऽपि प्रियतमो जीवनरक्षार्थमनुनेतव्य एवेति सख्या नायिकां प्रत्यभिव्यज्यते ।

**मध्यम एव वरं तन्न हि कार्यं सुजनदुर्जनाभ्यां नः ।**
**दृष्टस्तपति यथा किल खलस्तथाऽदृश्यमान इह सुजनः ॥५३॥**

यथा खलः दृष्टो दर्शनपथमायात एव तपति तापयति, स्वकृतमपकारं स्मारयित्वा दुःखमुत्पादयति तथा सुजनः अदृश्यमानो नेत्रयोरगोचरः सन् तापयति । तस्मात् सुजनदुर्जनाभ्यां नः अस्माकं न कार्यम् । मध्यमः साधारणजन एव वरं श्रेष्ठ इत्याशयः । दृष्ट इति भूतकालिक 'क्त' प्रत्ययेन, अदृश्यमान इति वर्तमानार्थकशानचा च 'पूर्णदर्शनेऽपि दुर्जनो

---

जेण विणा ण जिविज्जइ अणुणिज्जइ सो कआवराहो वि ।
पत्ते वि णअरदाहे भण कस्स ण वल्लहो अग्गी ॥ ५२ ॥

( येन विना न जीव्यतेऽनुनीयते स कृतापराधोपि ।
प्राप्तेऽपि नगरदाहे भण कस्य न वल्लभोऽग्निः ॥ )

ता मज्झिमो च्चिअ वरं दुज्जणसुअणेहिँ दोहिँ वि ण कज्जम् ।
जह दिट्ठो तवइ खलो तहेअ सुअणो अईसन्तो ॥ ५३ ॥

( तन्मध्यम एव वरं दुर्जनसुजनाभ्यां द्वाभ्यामपि न कार्यम् ।
यथा दृष्टस्तापयति खलस्तथैव सुजनोऽदृश्यमानः ॥ )

व्यथयति, सज्जनस्य पूर्वादर्शनस्य का कथा वर्तमानमप्यदर्शनं तापयति' इति तापतारतम्यमभिव्यज्यते। तपतीत्यन्तर्भावितण्यर्थः। यथा 'निर्घृण तपति वलीयः' इति शाकुन्तलम्।

प्रज्वल्य पानकुट्यां हुतवहनो ज्वलति यज्ञवाटेऽपि।
न हि ते परिहर्तव्या विषमदशासंस्थिताः पुरुषाः॥५४॥

पानकुट्यां मद्यपस्थाने (शौण्डिककुट्याम्) ज्वलित्वा वह्निर्यज्ञस्थानेऽपि ज्वलति। पवित्रेऽप्यपवित्रे च स्थले जुगुप्सां परिहृत्य समं व्यवहरतीत्यर्थः। अतः—विषमदशासंस्थिताः स्वस्य अयोग्यां दशाम् आपन्नाः पुरुषा घृणादृष्ट्या न परिहर्तव्याः। अत्र हुतवहदृष्टान्तेन- वह्निं यत्र नयन्ति लोकास्तत्रैव स स्वकार्यं करोति, एवमेव लोकोपकारकेण महापुरुषेण वैषम्यं परिहृत्य सर्वेषामेव हितसाधनं कर्तव्यमिति व्यज्यते। 'पानकुटी चण्डालकुटी' इति गङ्गाधरटीका।

ललितं प्रभोः प्रियाया मानो भाति क्षमा समर्थस्य।
भणितं च जानतः किल मौनं चाऽजानतो नूनम्॥५५॥

प्रभोः समर्थस्य स्वामिनः ललितं स्वेच्छाक्रीडितं भाति (शोभते) न तु यस्य कस्यचित्। प्रियायाः प्रीतिपात्र्या मानः (प्रणयकोपः) भाति न

---

पाणउडीअ वि जलिऊण हुअवहो जलइ जण्णवाडम्मि।
ण हु ते परिहरिअव्वा विसमदसासंठिआ पुरिसा॥ ५४ ॥

(पानकुट्यामपि ज्वलित्वा हुतवहो ज्वलति यज्ञवाटेऽपि।
न खलु ते परिहर्तव्या विषमदशासंस्थिताः पुरुषाः॥)

कुटुम्बानां सर्वस्वनाशे कृतेपि भोजनाद्यर्थमग्निः पुनः प्रज्वाल्यते । अत एव जीवनाधारभूतः सापराधत्वेऽप्यनुनीयत इति भावः । तथा च— कृतव्यलीकोऽपि प्रियतमो जीवनरक्षार्थमनुनेतव्य एवेति सख्या नायिकां प्रत्यभिव्यज्यते ।

मध्यम एव वरं तन्न हि कार्यं सुजनदुर्जनाभ्यां नः ।
दृष्टस्तपति यथा किल खलस्तथाऽदृश्यमान इह सुजनः ॥५३॥

यथा खलः दृष्टो दर्शनपथमायात एव तपति तापयति, स्वकृतमपकारं स्मारयित्वा दुःखमुत्पादयति तथा सुजनः अदृश्यमानो नेत्रयोरगोचरः सन् तापयति । तस्मात् सुजनदुर्जनाभ्यां नः अस्माकं न कार्यम् । मध्यमः साधारणजन एव वरं श्रेष्ठ इत्याशयः । दृष्ट इति भूतकालिक 'क्त' प्रत्ययेन, अदृश्यमान इति वर्तमानार्थकशानचा च 'पूर्णदर्शनेऽपि दुर्जनो

---

जेण विणा ण जिविज्जइ अणुणिज्जइ सो कआवराही वि ।
पत्ते वि णअरदाहे भण कस्स ण वल्लहो अग्गी ॥ ५२ ॥

( येन विना न जीव्यतेऽनुनीयते स कृताऽपराधोपि ।
प्राप्तेऽपि नगरदाहे भण कस्य न वल्लभोऽग्निः ॥ )

ता मज्झिमो व्विअ वरं दुज्जणसुअणेहिँ दोहिँ वि ण कज्जम् ।
जह दिट्ठो तवइ खलो तहेअ सुअणो अईसन्तो ॥ ५३ ॥

( तन्मध्यम एव वरं दुर्जनसुजनाभ्यां द्वाभ्यामपि न कार्यम् ।
यथा दृष्टस्तापयति खलस्तथैव सुजनोऽदृश्यमानः ॥ )

व्यथयति, सज्जनस्य पूर्वादर्शनस्य का कथा वर्तमानमप्यदर्शनं तापयति' इति तापतारतम्यमभिव्यज्यते। तपतीत्यन्तर्भावितण्यर्थः। यथा 'निर्वृत्त तपति वल्लीयः' इति शाकुन्तलम्।

प्रज्वल्य पानकुट्यां हुतवहनो ज्वलति यज्ञवाटेऽपि।
न हि ते परिहर्तव्या विषमदशासंस्थिताः पुरुषाः॥५४॥

पानकुट्यां मद्यपस्थाने (शौण्डिककुट्याम्) ज्वलित्वा वह्निर्यज्ञ-स्थानेऽपि ज्वलति। पवित्रेऽप्यपवित्रे च स्थले जुगुप्सां परिहृत्य समं व्यवहरतीत्यर्थः। अतः–विषमदशासंस्थिताः स्वस्य अयोग्यां दशाम् आपन्नाः पुरुषा घृणादृष्ट्या न परिहर्तव्याः। अत्र हुतवहदृष्टान्तेन- वह्निं यत्र नयन्ति लोकास्तत्रैव स स्वकार्यं करोति, एवमेव लोकोपकारकेण महापुरुषेण वैषम्यं परिहृत्य सर्वेषामेव हितसाधनं कर्तव्यमिति व्यज्यते। 'पानकुटी चण्डालकुटी' इति गङ्गाधरटीका।

ललितं प्रभोः प्रियाया मानो भाति क्षमा समर्थस्य।
भणितं च जानतः किल मौनं चाऽजानतो नूनम्॥५५॥

प्रभोः समर्थस्य स्वामिनः ललितं स्वेच्छाक्रीडितं भाति (शोभते) न तु यस्य कस्यचित्। प्रियायाः प्रीतिपात्र्या मानः (प्रणयकोपः) भाति न

---

पाणउडीअ वि जलिऊण हुअवहो जलइ जण्णवाडम्मि।
ण हु ते परिहरिअव्वा विसमदसासंठिआ पुरिसा॥ ५४॥

(पानकुट्यामपि ज्वलित्वा हुतवहो ज्वलति यज्ञवाटेऽपि।
न खलु ते परिहर्तव्या विषमदशासंस्थिताः पुरुषाः॥)

तु अप्रियायाः अमनोनीतायाः । समर्थस्य क्षमा भाति न तु अशक्तस्य । जानतः विज्ञस्य भणितं प्रवचनं भाति, अजानतः ( अज्ञस्य ) च मौनं भातीत्यर्थः ।

अर्जितविभवानामपि खल एव हि भाजनं खलानां स्यात् ।
निम्बफलानि विपक्वान्यपि काकैरेव खाद्यते ॥ ५६ ॥

उपार्जितं द्रव्यं यैस्तादृशानामपि खलानां भाजनं दानपात्रं खल एव स्यात्, न अन्यः । मूले ' उपार्जितद्रव्याणां खलानां भाजनं कः ?' ' खलः ' इति प्रश्नोत्तररूपमस्ति । इह तु साधारणोक्तिरस्तीति बोध्यम् । विपक्वानि परिपाकं गतानि । ' विपक्वानि अपि ' इति अपिना पक्वान्येव फलानि न सुजनोपयोगीनि तदा अपक्वानां तु का कथा । तथा च– धनार्जने सत्यपि यदा नास्मदादीनां तत्कृतं सौख्यं तर्हि धनाभावे तु किं ' वाच्यम् ' इति धनशालिनं दुर्जनं प्रति केनचिद्व्यज्यते ।

---

छज्जइ पहुस्स ललिअं पिआइ माणो खमा समत्थस्स ।
जाणन्तस्स अ भणिअं मोणं च अआणमाणस्स ॥ ५५॥

( शोभते प्रभोर्ललितं प्रियाया मानः क्षमा समर्थस्य ।
जानतश्च भणितं मौनं चाऽजानतः ॥ )

उप्पाइअदव्वाणँ वि खलाणँ को भाअणं खलो च्चेअ ।
पक्काइं वि णिम्बफलाइं णवरँ काएहिं खज्जन्ति ॥ ५६ ॥

( उत्पादितद्रव्याणामपि खलानां को भाजनं खल एव ।
पक्वान्यपि निम्बफलानि केवलं काकैः खाद्यते ॥ )

विज्ञानगुणमहार्घे पुरुषे द्वेष्यत्वमपि हि रमणीयम् ।
लज्जामहे प्रियत्वेनापि जने जनविनिन्दिते नूनम् ॥५७॥

विज्ञानगुणेन विज्ञतागुणेन परमादरणीये पुरुषे द्वेष्यत्वमपि ( तत्कृतं द्वेषपात्रत्वमपि ) अस्माकं प्रशस्यम् । जनैर्विनिन्दिते जने प्रियत्वेनापि लज्जामहे । विज्ञपुरुषस्य यदि वयं* द्वेष्या अपि भवेम तद्वपि सम्यक्, किन्तु लोकगर्हितस्य पुरुषस्य यदि वयं प्रणयभाजनमपि भवेम तदापि लज्जैवेत्याशयः । 'प्रियत्वेनापि' इति अपि पदेन — आनुकूल्यप्रदर्शनेनाऽपि लज्जामहे किं पुनरनुरागस्थापनेनेति अलज्जने विरागातिशयो ध्वन्यते ।

तुङ्गानि फलविपत्त्या फलसंपत्त्या नितान्तनम्राणि ।
हृदयानि सुपुरुषाणां महातरूणामिवोच्चशिखराणि ॥५८॥

---

विण्णाणगुणमहग्घे पुरिसे वेसत्तणं पि रमणिज्जम् ।
जणणिन्दिए उण जणे पिअत्तणेणावि लज्जामो ॥ ५७ ॥

( विज्ञानगुणमहार्घे पुरुषे द्वेष्यत्वमपि रमणीयम् ।
जननिन्दिते पुनर्जने प्रियत्वेनापि लज्जामहे ॥ )

फलसंपत्तीअ समोणआइँ तुङ्गाइँ फलविपत्तीए ।
हिअआइँ सुपुरिसाणं महातरूणं व सिहराइं ॥ ५८ ॥

( फलसंपत्त्या समवनतानि तुङ्गानि फलविपत्त्या ।
हृदयानि सुपुरुषाणां महातरूणामिव शिखराणि ॥ )

---

*'दाना तो दुश्मन भी भला' इति लोकप्रवादः ।

सुपुरुषाणां हृदयानि फलसंपत्त्या दैवदत्तवैभवसंपदा अत्यन्तमवनतानि, गर्वशून्यत्वात् । वैभवक्षये तु उन्नतानि, दैन्यवशेन हृदयाधोगतिराहित्यात् । अत एव सुजनहृदयानि महातरूणां उन्नतशिखराणीव अग्राणि इव सन्ति । महावृक्षाणां शिखराण्यपि—फलानां (प्रसवानाम्) अभावेन उन्नतानि । फलानां संपत्त्या च नम्राणि भवन्ति । फलशब्दस्य श्लिष्टत्वेन श्लेषानुप्राणिता सेयमुपमा । तथा च धनापगमेऽपि उन्नतहृदयेन न विमनायितव्यमिति दीनदशाऽपन्नं प्रति केनचिद् व्यज्यते ।

उदरं भरन्ति मातः शकुना अप्यात्मनो ह्यनुद्विग्नाः ।
विकलोद्धरणनिसर्गा भवन्ति यदि केऽपि सत्पुरुषाः ॥५९॥

अनुद्विग्नाः अन्येषामुपकारचिन्तया शून्याः शकुनाः पक्षिणोऽपि आत्मनः उदरं पूरयन्ति । यदि केपि महान्तः पुरुषा भवन्ति ते विकलानाम् आपद्गतानां उद्धरणः आपन्निवारको निसर्गः स्वभावो येषांताद्दशा भवन्ति । केपीत्यनेन-ताद्दशा महापुरुषा दुर्लभा भवन्तीत्यभिव्यंज्यते । स्वभोगे संपत्तिं विनियुञ्जाना बहवः, परोपकारपरायणा विरला इति कञ्चिदभिमानिनं प्रति व्यज्यते ।

---

पोट्टं भरन्ति सउणा वि माउआ अप्पणो अणुव्विग्गा ।
विहलुद्धरणसहावा हुवन्ति जइ के वि सप्पुरिसा ॥ ५९ ॥

( उदरं बिभ्रति शकुना अपि हेमातर आत्मनोऽनुद्विग्नाः ।
विह्वलोद्धरणस्वभावा भवन्ति यदि केपि सत्पुरुषाः ॥ )

लोकः परमार्थज्ञः सद्भावमृते न गृह्यते जातु ।
वञ्चयितुं काञ्जिकया को वा शक्नोति जीर्णमार्जारम् ।६०।

परमार्थज्ञो वस्तुतत्त्वज्ञो जनः सद्भावं स्नेहं विना जातु कदाचित् न गृह्यते न वशीक्रियते । जीर्णमार्जारं वृद्धविडालं दुग्धादिस्थाने काञ्जिकां प्रदाय को वा प्रतारयितुं शक्नोति ? । दुग्धस्य प्रातिद्वन्द्वये काञ्जिकादृष्टान्तेन—'कृत्रिमभावः स्नेहस्याग्रे अतिलघुः सत्वरपरिचेयश्चेति' तुच्छत्वं ध्वन्यते । काञ्जिका 'काँजी', मृत्पात्रे संहितं राजिकाऽम्लम् ।

ह्रियते गुणेन न जनो ह्रियते यो येन भावितस्तेन ।
मुक्ताफलानि मुक्त्वा गुञ्जा गृह्णन्ति किल पुलिन्दगणाः ।६१।

गुणद्वारा जनो न ह्रियते न वशीक्रियते । किंतु यो जनो येन भावितः प्रणयवशादनुध्यातः तेन अर्थात् प्रेमभाजनेन जनेन वशी-

---

ण विणा सब्भावेण घेप्पइ परमत्थजाणुओ लोओ ।
को जुण्णमज्जरं कञ्जिएण वेआरिउं तरइ ॥ ६० ॥

( न विना सद्भावेन गृह्यते परमार्थज्ञो लोकः ।
को जीर्णमार्जारं काञ्जिकया प्रतारयितुं शक्नोति ॥ )

ण गुणेण हीरइ जणो हीरइ जो जेण भाविओ तेण ।
मोत्तूण पुलिन्दा मोत्तिआइँ गुञ्जाओ गेह्णन्ति ॥ ६१ ॥

न गुणेन ह्रियते जनो ह्रियते यो येन भावितस्तेन ।
मुक्त्वा पुलिन्दा मौक्तिकानि गुन्जा गृह्णन्ति ॥ )

क्रियते । यस्य यत्र प्रेम भवति तत्र गुणाऽभावेपि सोऽनुरज्यतीति भावः । मौक्तिकेषु महामूल्यबहुमानं त्यक्त्वा स्वाभाविकप्रेमवशाद् भिल्ला गुञ्जास्वनुरज्यन्तीत्याशयः । गुणवन्तमपि भवन्तं हित्वा योऽयमगुणे तस्मिन् रज्यति तत्राऽस्य पूर्वानुवृत्तं प्रेमैव कारणं न तु तव काचित्त्रुटिरिति केनचित्कंचित्प्रतिध्वन्यते । गुणानां मुक्ता–साम्येन तेषामुत्कर्षं सूचयित्वा—'गुणवतो विहाय अगुणिषु प्रणयी गुञ्जाग्राहकभिल्लवदस्तीति' निगूढं ध्वन्यते । वशीक्रियते इत्यादिस्थाने ह्रियते इत्युक्त्या—'इदं वशीकरणं तत्त्वपरिचयपूर्वकं नास्ति, अपि तु वात्यया यथा बलात्तृणपल्लवादीन्यपह्रियन्ते तथा अविचारिततत्त्वमिदमाकर्षणमिति सूच्यते । ततश्च-गुणपरिचयशून्यं प्रेमाऽऽन्ध्यमिदमिति वक्तुर्निगूढ उपालम्भो ध्वन्यते ।

व्यसनेऽनुद्विग्नाः किल भयेऽपि धीरा अगर्विता विभवे ।
अविषमशीलाः सन्ति हि समेषु विषमेषु सत्पुरुषाः ॥६२॥

सत्पुरुषाः व्यसने दुःखे उद्वेगरहिताः । भये उपस्थितेऽपि धीराः ( अविचलचित्ताः ) । विभवे अगर्विता नम्रा भवन्ति । अत एव एते समेषु आत्मनोऽनुकूलेषु, विषमेषु आत्मनः प्रतिकूलेषु, उभयविधेष्वपि स्थलेषु अविषमशीलाः अभिन्नस्वभावा भवन्ति । सुखदुःखादिषु स्वभाववैषम्यं न प्रकटयन्तीत्यर्थः ।

---

वसणम्मि अणुव्विग्गा विहवम्मि अगव्विआ भए धीरा ।
होन्ति अहिण्णसहावा समेसु विसमेसु सप्पुरिसा ॥ ६२ ॥

( व्यसनेऽनुद्विग्ना विभवेऽगर्विता भये धीराः ।
भवन्त्यभिन्नस्वभावाः समेषु विषमेषु सत्पुरुषाः ॥ )

दैवे प्रतीहि विमुखे घटितमपि च हन्त विघटते पुंसाम् ।
कार्यं कथमपि बन्धं नैति यथा वालुकावरणः ॥ ६३ ॥

दैवे पराङ्मुखे सति नराणां घटितमपि कार्यं हन्त विघटते नश्यति, इति प्रतीहि एवं विश्वसिहि । तत्र निदर्शनमाह—यथा वालुकावरणः वालुकाभिः कृतः प्राकारः कथमपि बन्धं नैति तथा कार्यमपि बन्धं नैति, सिद्ध्यनुकूलं मार्गं नानुगच्छतीत्याशयः । 'प्राकारो वरणः सालः' इत्यमरः ।

उदकं लब्ध्वा केचिन्नितान्तमुत्तानितानना: सन्ति ।
रिक्ता नमन्ति सुचिरं रहट्टघटिका इवेह का पुरुषाः ॥६४॥

रहट्टो घटीयन्त्रम् 'अरहट' । तत्संबन्धिनः क्षुद्रा घटा इव तुच्छपुरुषाः सन्ति । उदकं लब्ध्वा यथा घटिकाः सविशेषम् ऊर्ध्वमुखा

---

देवम्मि पराहुत्ते पत्तिअ घडिअं पि विहडइ णराणम् ।
कज्जं वालुअवरणं व्व कहँ वि बन्धं विअ ण एइ ॥ ६३ ॥

( दैवे पराङ्मुखे प्रतीहि घटितमपि विघटते नराणाम् ।
कार्यं वालुकावरण इव कथमपि बन्धमेव नैति ॥ )

उअअं लहिउण उत्ताणिआणणा होन्ति केवि सविसेसम् ।
रित्ता णमन्ति सुइरं रहट्टघडिअ व्व कापुरिसा ॥ ६४ ॥

( उदकं लब्ध्वा उत्तानितानना भवन्ति केपि सविशेषम् ।
रिक्ता नमन्ति सुचिरं रहट्टघटिका इव कापुरुषाः ॥ )

भवन्ति तथा दुर्जना अपि स्वल्पलाभे एव दर्पेण मस्तकमुन्नमयन्ति, रिक्ततायां च सुचिरं नम्रा भवन्ति। कापुरुषाणां पक्षे-उदकपदेन तुच्छा धनसंपत्तिः सूच्यते। ततश्च महान्तः पुरुषा धनमिदं जलमिव न किञ्चित्, नीचैर्गामि च मन्यन्त इति ध्वन्यते।

मा विस्रम्भममीषां व्रजत बहुलचाटुकर्मनिपुणानाम्।
पिशुनानां हि शुनामिव निर्वर्तितकार्यविमुखानाम्।६५।

कार्यसिद्धेः पूर्वम् अत्यन्तं चाटुकार्यतत्पराणाम्। निर्वर्तिते कार्ये च विमुखानाम् अमीषाम् खलानाम् शुनामिव कुक्कुराणामिव विस्रम्भं विश्वासं मा कुरुत। चाटु श्लाघा 'खुशामद'।

दुर्गतकुटुम्बकृष्टिर्धौतेन मया कथं नु सोढव्या।
इति पश्य दशाऽपसरत्सलिलेन पटेन रुदितमिव॥ ६६ ॥

---

मा वच्चह वीसम्भं इमाणँ वहुचाडुकम्मणिउणाणम्।
णिव्वत्तिअकज्जपरम्मुहाणँ सुणआणँ व खलाणम्॥६५॥

( मा व्रजत विस्रम्भमेषां बहुचाटुकर्मनिपुणानाम्।
निर्वर्तितकार्यपराङ्मुखानां शुनकानामिव खलानाम्॥ )

दुग्गअकुटुम्बअड्ढी कहं णु मएँ धोइएण सोढव्वा।
दसिओसरन्तसलिलेण उअह रुण्णं व पडएण॥ ६६ ॥

( दुर्गतकुटुम्बाकृष्टिः कथं नु मया धौतेन सोढव्या।
दशापसरत्सलिलेन पश्यत रुदितमिव पटेन॥ )

धौतेन प्रक्षालितेन मया दरिद्रकुटुम्बकृतम् आकर्षणं कथं सोढव्यम् इति दशाभ्यः प्रान्तेभ्यः अपमरत्सलिलेन प्रपतत्पानीयेन वस्त्रेण रुदितमिव, इति त्वं पश्य। एतावत्कालपर्यन्तं दरिद्रकुटुम्बजातकर्षणमहं कथंचित् सोढवानस्मि, परं जलद्वारा प्रक्षालितेन मया जलसंबन्धे सति स्तिमिततन्तुतया जीर्णताधिक्ये एतत् आकर्षणं कथं सोढव्यमिति खेदात् अन्वलनिर्गलज्जलेन वस्त्रेण रुदितम्। प्रान्तेभ्यो निष्पतन्त्य इमा जलधारा न सन्ति, किन्तु दरिद्राऽऽकर्षणदुःखभयात्पटोऽयं रोदितीति तात्पर्यम्। दरिद्राकर्षणादचेतनः पटोऽपि रोदिति, ततः सहृदयस्य का कथेति–दरिद्रकुटुम्बसंकटे पतितः कश्चित्प्रतिबोध्यते। 'आकर्षण' पदेन–कुटुम्बे एकमात्रमिदमाच्छादनोपयोगि वस्त्रम्, अत एव प्रत्येकगृहजनस्तदेतद्वस्त्रं बलादाकर्षतीति कुटुम्बस्य दौर्गत्यातिशयो ध्वन्यते।

मरकत रत्नपरीक्षकपाशैर्घृष्टोऽसि प्रस्तरे तावत्।
का तव मूल्यकथा किल तिलमात्रं वर्तसे यावत्॥ ६७॥

हे मरकतमणे! रत्नपरीक्षकपाशैः दुःशिक्षितैः रत्नपरीक्षकैस्त्वं तावत् प्रस्तरे पाषाणे घृष्टोऽसि, परं यावत्त्वं तिलप्रमाणमपि वर्तसे तावत्ते मूल्यनिर्धारणकथा का? अपि तु त्वं अमूल्योऽपि। परीक्षाशतैरपि

---

दुःसिक्खिअरअणपरीक्खएहिँ घिट्टोसि पत्थरे तावा।
जा तिलमेत्तं वट्टसि मरगअ का तुज्झ मुल्लकहा॥ ६७॥

( दुःशिक्षितरत्नपरीक्षकैर्घृष्टोसि प्रस्तरे तावत्।
यावत्तिलमात्रं वर्तसे मरकत का तव मूल्यकथा॥ )

न भवन्तमेते तत्त्वत: परिचिनुयु:, यतो ह्येते मूढा: परीक्षका:, त्वं तु अनुपमगुणशालीति विदग्धस्य कस्यचिद् गुणातिशयो ध्वन्यते ।

प्राप्तः क्षणो न राजत्यतिकल्ये पूर्णिमाचन्द्रः ।
अन्तविरसश्च कामो ह्यसंप्रदानश्च परितोषः ॥ ६८ ॥

प्राप्तेराशायामेव आनन्दाधिक्यात्प्राप्त: उपस्थित: क्षण: उत्सवो न शोभते, प्राप्तत्वेन उत्कण्ठानिवृत्ते: । तथा अतिकल्ये अतिप्रभाते पूर्णिमाचन्द्रो न शोभते, सायंकाले क्रमेण उदेष्यतस्तस्य दर्शने यथोत्कण्ठा न तथाऽस्तं जिगमिषोस्तस्य दर्शने इति भावः । परिणामविरसा कामना न शोभते । या कामना परिणामे विरसा जायते न सा हृदयहारिणी । एवं सम्यक्प्रदानरहित: परितोषोपि न शोभते । यस्मिन् स्वामिन: परितोषे किंचित्प्रदानादिकं नास्ति स निष्फल एवेत्याशय: ।

---

पत्तो छणो ण सोहइ अइप्पहाअम्मि पुण्णिमाअन्दो ।
अन्तविरसो अ कामो असंपआणो अ परिओसो ॥ ६८ ॥

( प्राप्त: क्षणो न शोभते अतिप्रभाते पूर्णिमाचन्द्र: ।
अन्तविरसश्च कामोऽसंप्रदानश्च परितोष: ॥ )



# [ ३ ]

गेहिन्या माहानसकर्ममसीमलिनितेन हस्तेन ।
स्पृष्टं मुखमुपहसति हि चन्द्रावस्थां गतं दयितः ६९॥

महानससंम्बन्धिकर्मणो या मसी मलिनाम्बुकालिमा तया मलिनीकृतेन हस्तेन स्पृष्टम्, सक्रान्तश्यामिकमित्यर्थः । अत एव सलाञ्छनमिवेति चन्द्रावस्थां गतं गेहिन्याः मुखं प्रेमातिशयनिबन्धनकुतुकेन दयितः उपहसति । गेहिनीपदेन गृहकार्यं तदायत्तमेवेति गृहलक्ष्मीत्वं ध्वन्यते । दयितपदेन-प्राणप्रियस्य सोयमुपहासोऽपि तामानन्दयतीति परस्परप्रेमातिशयो व्यज्यते । 'यस्य यदुचितं कर्म तदनुतिष्ठतो वैरूप्यमलंकरणमेव । यतो हि लग्नमसीश्यामिकमपि दयितामुखं पत्या सपरिहासं चन्द्रेणोपमीयते । एवं च-गृहकार्यकरणसमये कुलवधूनां शोभैवाऽन्यादृशी भवतीति कुलनारीणां गृहकार्याद्विमुखत्वमनुचितमेवेति' गेहिनीं प्रति सूच्यते । हिन्दीमहाकविना ' विहारिणा ' पि महानसशोभिन्या गेहिन्याः कान्तिरेवमुपवर्णिता—

' टटकी धोई धोवती चटकीली मुखजोति ।
लसति रसोई के बगर जगर मगर दुति होति ॥ '

---

घरिणीएँ महाणसकम्मलग्गमसिमलिइएण हत्थेण ।
छित्तं मुहं हसिज्जइ चन्दावत्थं गअं पइणा ॥ ६९ ॥

( गृहिण्या महानसकर्मलग्नमसीमलिनितेन हस्तेन ।
स्पृष्टं मुखं हस्यते चन्द्रावस्थां गतं पत्या ॥ ).

+अस्य संस्कृतानुवादः—

' रुचिरा मुखरुचिरालसति विशदा शाटी भाति ।
महाकान्तिराभावहा महानसे प्रतिभाति ॥ '

**किं नात्मनो मृगयसे विमृगयसे दोहदं कुरवकस्य ।**
**सुभगैवं तव जाया वलितानपङ्कजं हसति ॥ ७० ॥**

' सुभग ' इति संबोधनेन सूच्यते यत्—आत्मानं सुभगं मन्यमानस्त्वं कुरबकवृक्षस्य दोहदं ( मदालिङ्गनरूपम् ) प्रार्थयसे, आत्मनः ( दोहदम् ) किं न प्रार्थयसे, एवं किल तव जाया अर्थात् संबन्धानुरोधेन भार्यामात्रं न तु प्रेयसी, वैमुख्याभिव्यञ्जनाय परावर्तितमुखपङ्कजं यथा स्यात्तथा हसतीत्यर्थः । किं च जायापदेन—' सा संततिजननोचिता ' इति साकूतमुपालम्भो ध्वन्यते । ' मदालिङ्गनेन कुरवकस्य फलोद्गमं प्रार्थयसे, आत्मनः पुत्ररूपं फलं किमिति न प्रार्थयसे । अहो तव जाड्यम्

---

दोहलिअमप्पणो किं ण मग्गसे मग्गसे कुरवअस्स ।
एअं तुह सुहग हसइ वलिआणणपङ्कअं जाआ ॥ ७० ॥

( दोहदमात्मनः किं न मृगयसे मृगयसे कुरवकस्य ।
एवं तव सुभग हसति वलिताननपङ्कजं जाया ॥ )

---

+ संस्कृते विहारिणः समपद्यानुवादं ये द्रष्टुं वाञ्छन्ति तैः ' साहित्य-वैभवम् '—' भट्टगार्डन, रेसिडेन्सी रोड जयपुर ' इति संकेतात्प्राप्यम् ।

इत्याशयः । स्त्रीणामालिङ्गनेन कुरबकस्य विकासो भवतीति कवि-समयः ।

अवितृष्णवीक्षणीयं समसुखदुःखं वितीर्णसद्भावम् ।
अन्योन्यहृदयलग्नं पुष्कलपुण्यैर्जनो जनं लभते ॥७१॥

जनः, अवितृष्णम् अनिवृत्तोत्कण्ठं यथा स्यात्तथा वीक्षणीयम्, सुन्दरमित्यर्थः । समसुखदुःखम् निजप्रेमिणः सुखदुःखयोः सतोरात्मनोऽपि सुखदुःखे मन्यमानम्, सहृदयमित्यर्थः । वितीर्णः प्रकटितः सद्भावः सौजन्यं येन, लोकव्यवहारदक्षिणमित्यर्थः । अन्योन्यं हृदयलग्नम् सानुरागमित्यर्थः । एवंविधगुणसंपन्नं जनं पुष्कलैः पुण्यैर्लभते ।

कुसुमरसमन्यमन्यं मधुकर इच्छति स यत्पातुम् ।
दोषः स नीरसानां कुसुमानां नैव मधुपस्य ॥ ७२ ॥

स मधुकरः अन्यम् अन्यम्, नानाविधं कुसुमरसमित्यर्थः । यत्

---

अविइह्णपेच्छणिज्जं समसुहदुःखं विइण्णसब्भावम् ।
अण्णोण्णहिअअलग्गं पुण्णेहिँ जणो जणं लहइ ॥ ७१॥

( अवितृष्णप्रेक्षणीयं समसुखदुःखं वितीर्णसद्भावम् ।
अन्योन्यहृदयलग्नं पुण्यैर्जनो जनं लभते ॥ )

अण्णण्णं कुसुमरसं जं किर सो महइ महुअरो पाउम् ।
तं णीरसाणँ दोसो कुसुमाणं णेअ भमरस्स ॥ ७२ ॥

( अन्यमन्यं कुसुमरसं यत्किल स इच्छति मधुकरः पातुम् ।
तन्नीरसानां दोषः कुसुमानां नैव भ्रमरस्य ॥ )

पातुमिच्छति स नीरसानां पुष्पाणां दोषः, मधुकरस्य न। एकत्र निजेच्छानुरूपस्य मधुनः अलाभादेव सोयं नानाकुसुमेषु परिभ्रमति, अत एव मनोऽभिलषितं रसमसमर्पयतां कुसुमानामेवायं दोष इत्याशयः। तथा च—"मामुपलभ्य यथामनोरथं रसमुपभुञ्जानस्यास्य यथा चाञ्चल्यं शाम्यति, तादृक् सौभाग्यं मे भवतीभिर्द्रक्ष्यते" इति सौभाग्याभिमानिनी काचिन्मानिनी सखीं प्रति स्वगुणोत्कर्षं ध्वनयति। मधुपपदेन—मधुपानं तस्य स्वभाव इति रसाभिलाषेण नानास्थानेषु भ्रमणं कुर्वतो नायकस्य दोषमार्जनं व्यज्यते।

**तस्या हृदये दुःसहवियोगकरपत्त्रपाट्यमाने हि।**
**प्रतिभाति बाष्पसलिलं कज्जलमलिनं प्रमाणसूत्रमिव ॥७३॥**

दुःसहविरहरूपेण करपत्रेण क्रकचेन विदार्यमाणे तस्याः हृदये। कज्जलेन श्यामम्, प्रवहत् नयनसलिलं विपाटनधारायाः सामञ्जस्यार्थं कृतं प्रमाणसूत्रमिव प्रतिभाति। वृक्षस्कन्धावपाटकाः क्रकचधारासारल्यार्थं कृष्णं मानसूत्रं पूर्वं विन्यस्यन्ति, ततः क्रकचेन तस्य पट्टिकाः पृथक्कुर्वन्तीति व्यवहारः। विरहिण्याः कज्जलसमासञ्जनं तु-'इदानीमायात एव' इति दृढानुरागस्य नायकस्यागमने विश्रम्भमूलकमुत्कण्ठातिशयमभिव्यनक्तीति बोध्यम्।

---

विरहकरवत्तदूसहफालिज्जन्तम्मि तीअ हिअअम्मि।
अंसू कज्जलमइलं पमाणसुत्तं व्व पडिहाइ ॥ ७३ ॥

(विरहकरपत्रदुःसहपाट्यमाने तस्या हृदये।
अश्रु कज्जलमलिनं प्रमाणसूत्रमिव प्रतिभाति ॥)

निष्कर्मणोऽपि शून्यात्क्षेत्राद्वसतिं न पामरो व्रजति ।
मृतदयिताशून्यीकृतगृहदुःखं परिहरन् हन्त ॥ ७४ ॥

मृता या दयिता प्रिया पत्नी, तया शून्यीकृतं यद् गृहं तत्र प्रियास्मरणजं दुःखं परिहरन्, प्रियास्मरणजाताद्दुःखादात्मानं रक्षन्नित्यर्थः । ईदृशः पामरः कृषीवलभृत्य. । निष्कर्मणः कार्यरहितात् अत एव जनशून्यात् अपि क्षेत्रात् वसतिं निजावासं गृहमिति यावत् । हन्त न व्रजति । ' वसति ' पदेन गृहमेव किं जनाऽऽवासमेव स न वाञ्छति, यतस्तत्र स्त्रीणामवलोकनेन जायायाः स्मरणं तस्य भवतीति प्रेमोत्कर्षः सूच्यते । ' पामर ' पदेन तु पांसुलपादोपि प्रियाप्रेमानुवृत्तिमेवं निर्वहति, त्वं तु पुनश्चतुराभिमानीत्युपालम्भः पूर्वां प्रियां विस्मृतवन्तं कञ्चन नागरिकं प्रत्यभिव्यज्यते ।

झञ्झानिलोत्तृणीकृतगृहविवरप्रपतदम्बुधाराभ्यः ।
कुड्यलिखितावधिदिनं रक्षत्यार्या करतलाभ्याम् ॥ ७५॥

---

णिक्कम्माहिँ वि च्छेत्ताहिँ पामरो णेअ वच्चए वसइम् ।
मुअपिअजाआसुण्णइअगेहदुक्खं परिहरन्तो ॥ ७४ ॥
( निष्कर्मणोपि क्षेत्रात् पामरो नैव व्रजति वसतिम् ।
मृतप्रियजायाशून्यीकृतगेहदुःखं परिहरन् ॥ )

झञ्झावाउत्तिणिअघरविवरपलोट्टसलिलधाराहिं ।
कुड्डलिहिओहिदिअहं रक्खइ अज्जा करअलेहिं ॥ ७५ ॥
( झञ्झावातोत्तृणीकृतगृहविवरप्रपतदम्बुधाराभ्यः ।
कुड्यलिखितावधिदिवसं रक्षत्यार्या करतलाभ्याम् ॥ )

आर्या साध्वी एषा । झञ्झावातेन उत्तृणीकृतम् ( उड्डायितानि आच्छादनतृणानि यस्य ) यद् गृहम्, तद्विवरात् प्रपतन्त्यो या वर्षासलिलधारास्ताभ्यः । कुड्ये भित्तौ लिखितम् यत् प्रियतमागमनस्य अवधिदिनं तत् करतलाभ्यां रक्षति, करतलाभ्यामाच्छाद्य तम् अवधिदिनलेखं रक्षतीत्यर्थः । करतलावच्छादनेन-जलधाराभ्यो निजशरीररक्षणापेक्षयापि प्रियलिखिताऽवधिदिनरक्षणं सुतरां बहुमतमिति प्रेमोत्कर्षो ध्वन्यते । 'आर्या' पदेन एतन्नामकं छन्दोपि सूचितमिति 'मुद्रा' लंकारः करतलोपनतः । प्राणानामपेक्षयापि भवदवधिदिनं सुबहुमानेन प्रतिपालयन्ती सा कथंचिज्जीवति । तदतिक्रमे तु तस्या जीवनं दुष्करमिति तत्प्रियतमं प्रति ध्वन्यते । 'अम्बुधाराभिः' इति छायाकरणं तु प्रमाद एव । रक्षणार्थकधातुभ्यः पञ्चमीविधानात् ।

शिखिपिच्छकावतंसा व्याधवधूर्गर्विता भ्रमति ।
गजमौक्तिकपरिरचितप्रसाधनानां पुरः सपत्नीनाम् ॥ ७६ ॥

गजमौक्तिकैः परिरचितं सम्यक्तया कलितं प्रसाधनं मण्डनं याभिस्तासाम् । 'परि' उपसर्गेण स्वसौन्दर्यसमुज्जृम्भणार्थं प्रसाधने यत्नातिशयः सूच्यते । एवंविधानां सपत्नीनामग्रे । शिखिपिच्छकं मयूरशिखण्डकः अवतंसः शिरोभूषणं यस्याः, एवंविधापि व्याधवधूः गर्विता

---

सिहिपेहुणावअंसा बहुआ वाहस्य गव्विरी भमइ ।
गअमोत्तिअरइअपसाहणाणँ मज्झे सवत्तीणम् ॥७६॥

( शिखिपिच्छावतंसा वधूर्व्याधस्य गर्विणी भ्रमति ।
गजमौक्तिकरचितप्रसाधनानां मध्ये सपत्नीनाम् ॥ )

सती भ्रमति। 'पिच्छक' इति लाघवद्योतकेन 'क' प्रत्ययेन तदवतंसनेऽप्ययत्नः प्रतीयते। तथा च 'येन महाबलिनः कुञ्जरान् हत्वा तत्कुम्भमुक्ताफलैर्भवत्यः प्रसाधिताः, स एव व्याधकुलपतिर्मत्संभोगात्यन्तप्रसङ्गेन संप्रति तथा क्षीणो यथा मयूरमात्रमारणे प्रभुः संवृत्तः' इति प्रियतमवशीकरणेन गर्विता एतदभिप्रायप्रकटनार्थं तासां पुरो भ्रमतीति भावः। 'याति' इत्याद्यनुक्त्वा 'भ्रमति' पदेन 'कस्याश्चन सपत्न्याः दृष्टौ पिच्छभूषणं कदाचित् पतेन्न वा' इति सर्वासां प्रदर्शनार्थं भ्रमणरूपयत्नेन गर्वातिशयो ध्वन्यते। 'मध्ये' इत्यपेक्षया 'सपत्नीनां पुरः' इत्युक्तौ गर्वातिशयो व्यज्यते। यतो हि सपत्नीनां मध्यगमने सापि तन्मिलितेव प्रतीयते। पुरः प्रतिष्ठाने तु—ताभ्यः पार्थक्यभावपुरस्सरं गौरवातिशयो ध्वन्यते। 'व्याधी' इत्यनुक्त्वा 'व्याधवधूः' इति कथनेन—'योयं व्याधो भवतीभिरात्मप्रियतमत्वेन मन्यते, स एव मे एवमनुगतः' इत्यात्मसौभाग्यप्रकटनेनाभिमानातिशयो द्योत्यते।

महिलासहस्रभरिते तव हृदये सुभग सा किलाऽमान्ती।
अनुदिनमनन्यकर्मा ह्यङ्गं तन्वपि तनूकुरुते ॥ ७७ ॥

महिलासहस्रेण भरिते व्याप्ते तव हृदये। अमान्ती अवकाशमलभमाना सा मत्सखी। अनुदिनं समग्रमपि दिवसं व्याप्य अनन्यकर्मा

---

महिलासहस्सभरिए तुम्ह हिअए सुहअ सा अमाअन्ती।
दिअहं अणण्णकम्मा अङ्गं तणुअं पि तणुएइ ॥ ७७ ॥

( महिलासहस्रभरिते तव हृदये सुभग साऽमान्ती।
दिवसमनन्यकर्मा अङ्गं तनुकमपि तनूकरोति ॥ )

त्यक्तान्यकार्या सती । तनु अपि स्वतः कृशमपि स्वस्याः अङ्गं तनूकुरुते । हृदये अवकाशलाभार्थं कृशमपि अङ्गं कृशतरं करोतीत्यर्थः । महिलासहस्रेत्यनेन ' त्वमेव तास्वनुरज्यसि, न ता धूर्तास्त्वय्यनुरज्यन्ति ' इति सूच्यते । अनन्यकर्मेत्यनेन–त्वत्समागमोपायचिन्तां विहाय नान्यत्किमपि कार्यं तस्याः कृते' इति गृहकार्यविरत्या अनुरागातिशयो द्योत्यते । ततश्च महिलासहस्रे तवानुरागं जानत्यपि त्वपि दृढप्रेमा सेयं त्वद्गतचिन्तया प्रतिदिनं कृशा भवति , निष्ठुरस्त्वं तु तथापि तां नानन्दयसीति सखी नायकं प्रति गूढमुपालभते ।

बाष्पसलिलपरिषिक्तस्तप्तो दीर्घोष्णबहुलनिःश्वासैः ।
श्यामशबलमिव तस्या अधरः साधयति तव विरहे ॥७८॥

दीर्घैः उष्णैः बहुलैः ( प्रचुरैः ) च निःश्वासैस्तापितः, ततः बाष्पसलिलेन ( परि ) सम्यक् स्नातः, तस्याः अधरः । तव विरहे ' श्यामशबलं ' व्रतविशेषं साधयतीव । एतस्मिन् व्रते पूर्वमग्नौ प्रविश्य जले प्रविश्यते । तथा च–' तस्या अधरो यद् व्रतमनुतिष्ठति तस्य पारणम् ( त्वदधरसमागमरूपम् ) त्वदायत्तमेव' इति नायकं प्रति सख्या निपुणमभिव्यज्यते ।

---

दीहुण्हपउरणीसासपआविओ बाहसलिलपरिसित्तो ।
साहेइ सामसबलं व तीएँ अहरो तुह विओए ॥ ७८ ॥

( दीर्घोष्णप्रचुरनिश्वासप्रतप्तो बाष्पसलिलपरिषिक्तः ।
साधयति श्यामशबलमिव तस्या अधरस्तव वियोगे ॥ )

बहुशोपि कथ्यमानं तव वचनं मम हि हस्तसंदिष्टम् ।
न श्रुतमिति जल्पन्ती पुनरुक्तशतं करोत्यार्या ॥७९ ॥

बहुशः वारंवारमपि कथ्यमानम् मम हस्तेन संदिष्टम् मद्द्वारा तवाभिमुख्यमुपस्थापितमित्यर्थः । वाचा संदिष्टमपि लोकोक्त्यनुसारेण 'हस्तसंदिष्टम्' इत्युक्तम् । तव ( नायकस्य ) वचनं 'न श्रुतम्' इति जल्पन्ती आर्या श्रेष्ठा सा नायिका । पुनरुक्तशतं करोति संपादयति । बहुप्रकारेण वारं वारं कथ्यमानमपि मदुपस्थापितं तव संदेशवचनं प्रणयिना त्वया संदिष्टम् इति प्रणयबहुमानाभ्यां मया न श्रुतमित्युक्त्वा बहून् वारान् सा आवर्तयतीत्यर्थः । अथवा दूत्युक्तं नायकसंदेशवचनं न पुनरुक्तं भवति । यतो हि 'निभृततरमुक्ता एवंविधवाक्यसंघटना कदाचन न बुद्धा भवेत्' इति श्रवणे संदेहवशाद्प्रत्येककथनावृत्तौ शब्दशय्यापरिवर्तनेन नायकसंदेशे पुनरुक्तेरभावात् । किंतु 'न श्रुतम्, न श्रुतम्' इति तदेव वचनमावर्तयन्ती नायिकैव पुनरुक्तशतं करोति । अतएवात्र गाथाकारेण प्रोक्तम् : 'पुनरुक्तशतं करोत्यार्या' । 'बहुवारं बहुप्रकारं च' इत्यर्थसूचकेन 'बहुशः' इति शस्प्रत्ययेन—कथ्यमाने पुनःपुनरावृत्त्या प्रकारभेदेन च नायिकायाः प्रणयातिशयो द्योत्यते । 'आर्या' इत्यनेन छन्दसोपि नामसूचनात् 'मुद्रा' लंकारः । नायिकासकाशात्प्रत्यागताया दूत्याः नायकं प्रत्युक्तिः ।

---

बहुसो वि कहिज्जन्तं तुह वअणं मज्झ हत्थसंदिट्ठम् ।
ण सुअं त्ति जम्पमाणा पुणरुत्तसअं कुणइ अज्जा ॥ ७९ ॥

( बहुशोपि कथ्यमानं तव वचनं मम हस्तसंदिष्टम् ।
न श्रुतमिति जल्पन्ती पुनरुक्तशतं करोत्यार्या ॥ )

प्रियतमाऽऽगमनस्य अवधिदिनं मा आगच्छतु इति शङ्कायुक्ताभिः आत्मीयाभिः सखीभिः भित्तिविलिखिता छिन्ना: रेखा: चोरिकया चौर्येण तत्प्रच्छन्नमिति यावत् । प्रोञ्छयन्ते उन्मार्ज्यन्ते । अवधिदिनगणनार्थं नायिकया प्रत्यहं भित्तौ रेखा: कृता: । तत्र अवधिदिनपूरणे ऽपि यदि प्रियो नागच्छेत्तर्हि इयं प्राणान् जह्यादिति शङ्कया अवधिदिनस्य अनागमनार्थं सखीभिश्छिन्ना रेखा अलक्षितं प्रोञ्छयन्ते इत्याशयः । नियतसमये यदि प्रिय आगच्छेत्तर्हि—अस्या दृष्टौ अवधे: पूर्वमेवाऽऽगमनात्सविशेषानन्दः, अवधेरग्रे द्वित्रिदिनलंघने चास्याः प्राणरक्षा भवेदिति सखीनां तात्पर्यम् । 'कुड्यविलिखित' पदेन—अवधिदिनं कियदवशिष्टमित्युत्कण्ठया तत्सर्वदा संमुखस्थमेव तिष्ठतीति प्रणयातिशयः परिपोष्यते ।

तव मुखसादृश्यं नो लभत इति हि पूर्णमण्डलो विधिना ।
घटयितुमिवान्यमयमिव पुनरपि परिखण्डयते शशभृत् ॥८२॥

पूर्णमण्डलोऽप्ययं चन्द्रः तव मुखसादृश्यं न लभते इति कारणात् एनम् अन्यमयम् अन्यप्रकारं घटयितुमिव निर्मातुमिव विधिना विधात्रा शशभृत् चन्द्रः पुनरपि पूर्णमण्डलत्वेपि परिखण्ड्यते एकद्व्यादिकलाक्रमेण हीनः क्रियते । प्रतिदिनमेकामेकां कलां परिवर्ध्य चन्द्रः पूर्णः कृतः । परं पूर्णत्वेपि सोयं तव मुखशोभां न लभते इति पूर्णं कृत्वा पुनरेकद्व्या-

---

तव मुहसारिच्छं ण लहइ त्ति संपुण्णमण्डलो विहिणा ।
अण्णमअं व घडइउं पुणो वि खण्डिज्जइ मिअङ्को ॥८२॥

( तव मुख सादृश्यं न लभत इति संपूर्णमण्डलो विधिना ।
अन्यमयमिव घटयितुं पुनरपि खण्डयते मृगाङ्कः ॥ )

दिकलाक्रमेण सोयं खण्डयत इत्याशयः । अत एव मत्कृतच्छायायां परिखण्ड्यते इति 'परि' पदेन—प्रतिदिनमेकामेकां कलां परिवर्ध्य 'मुखसदृशं जातं न वा' इति यथा पूर्वं परीक्षितं तथा साम्प्रतमपि परितः एकामेकां कलां न्यूनीकृत्य मुखसादृश्यपरीक्षणार्थं परितः एकैककलाखण्डनक्रमसूचनपूर्वको मुहुर्मुहुर्निजनिर्माणनिरीक्षणसंरम्भो द्योत्यते। चन्द्रमसो मुहुर्मण्डलपूरणं मुहुः खण्डनं चेत्ययं विधातुर्व्यतिकरः कल्पान्तं यावन्न समाप्स्यते । ततश्च-तव मुखसादृश्यं कल्पान्तपर्यन्तमपि चन्द्रो न लप्स्यते इति मुखशोभातिशयश्च 'घटयितुमिव' इत्युत्प्रेक्षया ध्वन्यते ।

अद्य गतोऽद्य गतो बत सोऽद्य मतश्चेति गणयन्त्या ।
प्रथमे दिनार्द्ध एव हि रेखाभिश्चित्रितं कुडयम् ॥ ८३ ॥

'सः अद्य गतः, अद्य गतः' इति कृत्वा, एकदिनार्थमेकां रेखां विलिख्य गणयन्त्या नायिकया तया प्रथमे दिनार्द्धे एव रेखाभिर्गृहभित्तिश्चित्रिता । अत्र 'गणयन्त्या' इति वर्तमानार्थाभिधायिना शतृप्रत्ययेन 'चित्रितम्' इति भूतार्थवाचकेन 'क्त' प्रत्ययेन च—'गणना तु वर्तमानैवास्ति परमेतावत्काले एव भित्तिः सर्वापि रेखाभिः पूरिता' इति नायिकाचेष्टितसूचनेन क्षणक्षणस्य बहुदिवसगमनवत् समधिकवेदनादायित्वमभिव्यज्यते । मासादीनां का कथा संपूर्णदिनमपि न व्यतीतम्

---

अज्जं गओत्ति अज्जं गओ त्ति अज्जं गओत्ति गणरीए ।
पढम व्विअ दिअहद्धे कुड्डो रेहाहिँ चित्तलिओ ॥ ८३ ॥

( अद्य गत इत्यद्य गत इत्यद्य गत इति गणनशीलया ।
प्रथम एव दिवसार्द्धे कुडयं रेखाभिश्चित्रितम् )

परं दिनार्द्धे एव तया बहुदिवसगमनजन्यं दुःखमनुभूय रेखाभिर्भित्तिः पूरितेति प्रियानुस्मरणजन्यो नायिकाया मोहातिशयो ध्वन्यते ।

प्रियसंस्मरणप्रलुठदृग्जलधारानिपातशङ्कितया ।
आवक्रितकन्धरया पथिकगृहिण्या प्रदीयते दीपः ॥८४॥

सायंकाले गृहमागच्छतः प्रियस्य स्मरणेन प्रलुठत् नेत्रयोर्मध्ये सर्वतः संचरत् यत् दृग्जलम् । तस्य धारानिपातशङ्काशालिन्या । प्रोषितपतिकया आवक्रितकन्धरया सत्या । दीपः दीयते प्रज्वाल्यते इति यावत् । दीपस्योपरिभागात् यदि मुखं न परावर्त्यते तर्हि अश्रुजलपतनेन दीपज्वलनं न भवेदिति भावः । 'प्रलुठत्' पदेन दीपदानसमये अश्रुविसर्जनस्य अमङ्गलत्वबुद्ध्या अवरोधेन बाष्पस्य नेत्राद्बहिरनिष्क्रमणात् नेत्रमध्ये एव इतस्ततः संचरणं सूच्यते । 'धारा' पदेन—'बहोः कालादुपचितमश्रुजलम् । अतो विवशतायामपि यदि तन्निपातः स्यात्तर्हि न बिन्दुः पतेत्, अपि तु धारा स्यात्' इति स्मृतिभावविजृम्भकदुःखातिशयो व्यज्यते ।

कम्पस्विन्नकराङ्गुलिपरिग्रहस्खलितलेखनीमार्गे ।
स्वस्त्येव पूर्यते नो प्रियसखि लेखे लिखामः किम् ॥८५॥

---

पिअसंभरणपलोट्टन्तवाहधाराणिवाअभीआए ।
दिज्जइ वङ्कग्गीवाएँ दीवओ पहिअजाआए ॥ ८४ ॥

( प्रियसंस्मरणप्रलुठद्बाष्पधारानिपातभीतया ।
दीयते वक्रग्रीवया दीपकः पथिकजायया ॥ )

कम्प्राः कम्पमानाः, स्विन्नाः स्वेदयुक्ताश्च या. कराङ्गुलयः तद्द्वारा परिग्रहणेन स्खलिता विध्वस्ता या लेखनी तस्याः मार्गे । 'स्वस्ति' इति प्रारम्भिकवर्णद्वयमेव न पूर्यते समाप्यते । आत्मवेदनादिकम् अन्यत् लेखे किं लिखामः । प्रियस्मरणेन अङ्गुलीषु तथाविधः कम्पः स्वेदोद्गमश्च भवति यथा लेखिनी मुहुर्मुहुः स्खलिता भवति । ततश्च 'स्वस्ति' मात्रमपि लेखितुं न शक्नोमि, स्वसंतापादिकं प्रियतमाय किं लिखामीत्याशयः ।

हंहो दुष्करकारक पुनरपि चिन्तां करोषि गमनस्य ।
नाद्यापि हन्त सरला भवन्ति वेण्यास्तरङ्गिणश्चिकुराः ॥८६॥

हंहो विरहदानरूपदुष्करकार्यस्य संपादक ! गमनस्य परदेशे गमनस्य विचारं पुनरपि करोषि ? तव प्रवासे वेण्याः वेणीभूतस्य केश-कलापस्य तरङ्गिणः कुटिलाश्चिकुराः केशाः अद्यापि सरला न भवन्ति ।

---

वेविरसिण्णकरङ्गुलिपरिग्गहक्खलिअलेहणीमग्गे ।
सोत्थि व्विअ ण समप्पइ पिअसहि लेहम्मि किं लिहिमो ॥८५॥

( वेपनशीलस्विन्नकराङ्गुलिपरिग्रहस्खलितलेखनीमार्गे ।
स्वस्त्येव न समाप्यते प्रियसखि लेखे किं लिखामः ॥ )

अ-वो दुक्करआरअ पुणो वि तन्ति करेसि गमणस्स ।
अज्ज वि ण होन्ति सरला वेणीअ तरङ्गिणो चिउरा ॥८६॥

( अव्वो दुष्करकारक पुनरपि चिन्तां करोषि गमनस्य ।
अद्यापि न भवन्ति सरला वेण्यास्तरङ्गिणश्चिकुराः ॥ )

जटारूपेण परिणताः केशास्तथा वक्रीभूताः यथा एषु दिनेषु प्रतिदिनं प्रसाधने कृतेऽपि अद्यपर्यन्तमपि ते पूर्ववत्सरला न जाताः। अनेन प्रवासात् आगमनस्य स्वल्पकालता सूच्यते। ततश्च केशपर्यन्तेष्वपि त्वत्प्रवासचिह्नम् अद्यापि वर्तते, परम् एतावत्त्वरितं पुनर्गन्तुं चिन्तयसि, दुष्करं करोषीति नायकं प्रति शीघ्रप्रवासे दुःखातिशयो ध्वन्यते। हंहो इति साश्चर्यचमत्कारे। तथा च— प्रवासादागमनोत्तरं – 'विरहे मया भूयान् क्लेशोऽनुभूतः' इत्यादि विश्रब्धमालपितवानपि त्वं पुनः प्रवासं विचारयसीत्याश्चर्यमेवेति नायिकयाऽभिव्यज्यते। चिन्तां करोषीत्यनेन— 'गमनस्य का कथा, तच्चिन्तामात्रमपि मे विरहवेदनादायकमस्तीति' खेदातिशयो ध्वन्यते। शीघ्रप्रवासनिवारणे सोयं भावो विहारिणाप्यनुजीवितः—

'अजौं न आये सहज रँग विरहदूवरे गात।
अवही कहा चलाइयत ललन चलन की बात॥'

संस्कृतम्—'विरहतनुस्तनुरिदमवधि न सहजरङ्गमियाय।
किमधुनैव संस्तूयते कमन! गमनमह्नाय॥'

अनयोस्तुलनात्मकमालोचनं गाथाया उत्कर्षश्च मत्कृतसंस्कृतगाथासप्तशत्यां द्रष्टव्यः।

**पृच्छामः सद्भावादयि सखि वद किं समस्तमहिलानाम्।**
**दयिते गते नु वलयाः करस्थिता एव वर्द्धन्ते॥ ८७॥**

---

सहि साहसु सब्भावेण पुच्छिमो किं असेसमहिलाणम्।
वड्ढन्ति करठिआ व्विअ वलआ दइए पउट्ठम्मि॥ ८७॥
( सखि कथय सद्भावेन पृच्छामः किमशेषमहिलानाम्।
वर्द्धन्ते करस्थिता एव वलया दयिते प्रोषिते॥ )

विरहजातं दौर्बल्यमजानती काचिन्मुग्धा सखीं पृच्छति— सद्भावात् स्नेहात्पृच्छाम:, नात्र किञ्चिदन्यथा बोद्धव्यम्। हे सखि वद! किं दयिते प्रोषिते सति समस्तमहिलानां करे स्थिता एव काचादिनिर्मिता: कङ्कणा वर्द्धन्ते उत ममैव ? करे स्थिता एवेत्यनेन-विरहकार्श्यवशात् हस्तात्पुन: पुनर्गलन्तोपि मया सौभाग्यचिह्नबहुमानेन करे एव स्थापिता:, न हस्ताद्बहि: कृता: । एवं च विरहकार्श्यातिशय: प्रियेऽनुरागबहुमानश्च सूच्यते ।

झञ्झावातोत्तृणिते गृहे रुदित्वा हि नि:सहनिषण्णाम् ।
दर्शयतीव घनानां प्रोषितपतिकां नु विद्युदुद्योतः ॥८८॥

झञ्झावातेन वर्षावायुना उत्तृणिते तृणशून्यीकृते गृहे छदिषो गृहे । प्रियस्मरणोत्कण्ठया रुदित्वा नि:सहं यथा स्यात्तथा निषण्णां स्थिताम् । प्रोषितपतिकां विद्युत: उद्योत: प्रकाश: घनानां घनान् दर्शयतीव । घनानामिति कर्मण: शेषत्वविवक्षायां षष्ठी । भवतामुदयात् इयं वराकी एतामवस्थां तु प्राप्ता । किमिदानीमबलामधिकं क्लेशयथ । प्रत्युत पत्युरेतस्या: कुरुतोत्कण्ठां येन त्वरितमिमां जीवयेदित्याशयेन मेघान् इमां दर्शयतीति भाव: । स्त्रीत्वान्मृदुहृदयतया विद्युत: प्रोषितपतिकां प्रति पक्षपात: । अत एव दयमाना सती प्रियतमोत्कण्ठासंवर्द्धनार्थं

---

झञ्झावाउत्तणिए घरम्मि रोऊण णीसहणिसण्णम् ।
दावेइ व गअवइअं विज्जुज्जोओ जलहराणम् ॥८८॥

( झञ्झावातोत्तृणिते गृहे रुदित्वा नि:सहनिषण्णाम् ।
दर्शयतीव गतपतिकां विद्युद्द्योतो जलधराणाम् )

मेघानुत्तेजयतीत्यर्थः। अथवा विरहवेदनया समधिकक्लिष्टाम्, अत एव मेघदर्शने दुःखाधिक्यभयात् गृहे निलीय निषण्णां प्रोषितपत्निकां विद्युत् उपजापकारिणीव ( सूचिका, गुप्तचरीव ) मेघान् दर्शयति। स्त्रीत्वात् स्त्रीरहस्याभिज्ञा विद्युत् क्लेशसंवर्द्धनार्थं निजदयितान् मेघान् प्रति इमां सूचयतीत्याशयः। वातेनैव तृणानामुड्डयनेन मुञ्जबन्धनानां गलितत्वं सूच्यते, तेन बहोः कालाद्विरहवेदनामेषा विसोढवतीति ध्वन्यते। गृहे निषण्णामित्यनेन-त्वद्विरहविषादाद् गृहजनसंकथास्वस्या मनो न रज्यति, अतएव विजने गृहे तिष्ठतीति ग्लान्याऽनुरागातिशयो ध्वन्यते। दर्शयतीत्यनेन 'दुःखिता असौ तु मेघान् न पश्यति, परं विद्युत् त्रुटित-गृहान्तरालाद्बलादिमां 'मेघान्दर्शयतीति' त्वरितमियमुज्जीवनीयेति कान्तं प्रति ध्वन्यते।

अतिकोपापि श्वश्रूर्विरोदिता व्युषितकान्तया स्नुषया।
पादपतनावनतया ह्युभयोरपि वलययोः पततोः॥ ८९॥

चरणवन्दनार्थम् अवनतया नम्रीभूतया प्रोषितपतिकया स्नुषया ( पुत्रवध्वा ) नमनसमये उभयहस्तविधृतयोः द्वयोरपि वलययोः निपततोः सतोः अतिकोपनाऽपि श्वश्रूः विशेषेण रोदिता। पदवन्दनसमये दौर्बल्यातिशयात्सहजमेव निपतन्तौ कङ्कणावपि वराक्या न ज्ञाताविति दृष्ट्वा निष्ठुराया अपि श्वश्र्वाः करुणाऽभूदित्याशयः। 'वलययोः'

---

अइकोवणा वि सासू रुआविआ गअवईअ सोह्वाए।
पाअपडणोणआए दोसु वि गलिएसु वलएसु॥८९॥

( अतिकोपनापि श्वश्रू रोदिता गतपतिकया स्नुषया।
पादपतनावनतया द्वयोरपि गलितयोर्वलययोः॥ )

इति द्विवचनेन—दौर्बल्याद् बहवो वलयास्तु कराद्विगलिता एव, किन्तु सौभाग्यचिह्नमिति कृत्वा प्रत्येकहस्ते एकैको वलयो रक्षितः, इति दौर्बल्यातिशयः प्रियसौभाग्याभिमानश्च व्यज्यते । रोदितेत्यनेन—कोपशीलापि सा केवलं मार्दवमेव न गता प्रत्युत विद्रुतहृदयापि जातेति स्नुषाया दयनीयत्वातिशयो ध्वन्यते ।

पथिकवधूर्विवरान्तरगलितजलार्द्रे गृहेऽप्यनार्द्रमहो ।
उद्देशमार्द्रयति पतदविरतबाष्पाम्बुनिवहेन ॥ ९० ॥

प्रोषितपतिका जीर्णस्य तृणच्छदिषः विवरान्तरात् छिद्रान्तराद् गलितेन जलेन आर्द्रे गृहे । अनार्द्रं शुष्कमपि स्थानम् । अनवरतं पतता बाष्पसलिलेन आर्द्रयति । गृहाच्छादनविवरात्पतता जलेन दुःखिता शुष्के स्थाने तिष्ठति, परं प्रियस्मरणे सति निरन्तरं पतद्भिरश्रुभिस्तदपि स्थानमार्द्रं करोतीत्याशयः । 'वधू' पदेन नवयौवनात्वं गुरुजनलज्जावशाद् गृहान्तःस्थितिसापेक्षत्वं च सूच्यते । जीर्णगृहवर्णनाच्च—दारिद्र्यदुःखाक्रान्तापि प्रेमैकजीवना साद्यापि जीवनं न जहातीति सूच्यते ।

रक्षति पुत्रं शिरसा पटलप्रान्तोदकं प्रतीच्छन्ती ।
आर्द्रीभवन्तमश्रुभिरथ पथिकवधूर्न लक्षयति ॥ ९१ ॥

---

पहिअवहू विवरन्तरगलिअजलोल्ले घरे अणोल्लं पि ।
उद्देसं अविरअवाहसलिलणिवहेण उल्लेइ ॥ ९० ॥

( पथिकवधूर्विवरान्तरगलितजलार्द्रे गृहेऽनार्द्रमपि ।
उद्देशमविरतबाष्पसलिलनिवहेनार्द्रयति ॥ )

पटलप्रान्तात् छदिःप्रान्तात् प्रस्रुतम् उदकम् । शिरसा स्वमस्तकेन प्रतीच्छन्ती सहमाना पथिकवधूः पुत्रं जलाद् रक्षति । प्रियस्मरणाज्जनितैः अश्रुभिः आर्द्रीभवन्तं तु तं न लक्षयति । स्वयं वर्षाजलसहनेन निजशरीरोपर्ययत्नात् नायकविरहवेदनातिशयो व्यज्यते । अश्रुभिरार्द्रीभवन्तं न लक्षयतीत्यनेन अङ्कारोपितपुत्रा प्रावृडागमेन उद्वेलितचित्ततया निरन्तरं प्रियतममेव ध्यायन्ती सर्वमन्यन्न पश्यति, नाऽपि च स्मरतीति तस्या एकतानतातिशयो ध्वन्यते ।

सुन्दर यदि कौतुकितोऽसि सकलतिथिचन्द्रदर्शनसुखानाम् ।
तन्मोच्यमानकञ्चुकमीक्षस्व मुखं मसृणमस्याः ॥ ९२ ॥

द्वितीयादिसकलतिथिषु यानि चन्द्रदर्शनस्य सुखानि तेषां ( दर्शने ) यदि त्वं कौतुकवान् असि, तर्हि मसृणं मन्दं यथा स्यात्तथा, शनैःशनैरिति यावत् । मोच्यमानं विसृज्यमानं कञ्चुकवस्त्रम् ' कुरती '

---

रक्खेइ पुत्तअं मत्थएण ओच्छोअअं पडिच्छन्ती ।
अंसुहिँ पहिअघरणी ओल्लिज्जन्तं ण लक्खेइ ॥९१॥

( रक्षति पुत्रं मस्तकेन पटलप्रान्तोदकं प्रतीच्छन्ती ।
अश्रुभिः पथिकगृहिणी आर्द्रीभवन्तं न लक्षयति ॥ )

जइ कोत्तिओसि सुन्दर सअलतिहीचन्ददंसणसुहाणम् ।
ता मसिणं मोइज्जन्तकञ्चुअं पेक्खसु मुहं से ॥ ९२ ॥

( यदि कौतुकितोसि सुन्दर सकलतिथिचन्द्रदर्शनसुखानाम् ।
तन्मसृणं मोच्यमानकञ्चुकं प्रेक्षस्व मुखं तस्याः ॥ )

इति ख्यातं यस्मात्, ईदृशम् अस्याः ( नायिकायाः ) मुखं वीक्षस्व । परस्परश्लिष्टोर्ध्वीकृतबाहुलतिकं प्रतिलोमक्रमेण कञ्चुकावतारणसमये मुखमण्डलात्क्रमशः कञ्चुकाऽपसरणेन चिबुकादिभागस्य क्रमक्रमेण दर्शनं भवति । अन्ते च संपूर्णमपि मुखमण्डलमपगतावरणं भवति । एतेन क्रमिककञ्चुकापसरणेन दृश्यमानचिबुकादिपर्यन्तभागस्य मुखस्य क्रमिकीषु दर्शनावस्थासु द्वितीयातृतीयादितिथिषु उदितस्य चन्द्रस्य साम्यं कलयित्वा, अन्ते च कञ्चुकस्य सर्वथाऽपसरणेन पूर्णस्य पूर्णिमा-चन्द्रस्य साम्यं संस्थापितमिति सर्वतिथिचन्द्रदर्शनसौख्यस्याशयः। 'सुन्दर' इत्यामन्त्रणस्य—' त्वं तु सौन्दर्याऽभिमानं वहस्येव, परं पश्य तस्याः सौन्दर्यमित्याकूतम् ।

धवलोऽसि यदपि सुन्दर तदपि तु मम रञ्जितं हृदयम् ।
रागभृतेऽपि च हृदये सुभग विनिहितो न रक्तोऽसि ॥९३॥

हे सुन्दर ! त्वं धवलः शुभ्रः ( श्वेतः ) असि तदपि त्वया मे हृदयं रञ्जितं रक्तवर्णीकृतम् । धवलेन रक्तीकरणं विरुद्धम्, किन्तु—त्वं धवलः अर्थात् श्रेष्ठः असि, अत एव गुणद्वारा त्वया मे हृदयं अनुरक्ती-कृतम्, इति विरोधपरिहारः । हे सुभग ! रागेण रङ्गेण भृते पूर्णेऽपि हृदये त्वं विनिहितः ( स्थापितः ) तथापि त्वं न रक्तः रङ्गयुक्तो न जात

---

धवलोसि जइ वि सुन्दर तह वि तुए मज्झ रञ्जिअं हिअअम् ।
राअभरिए वि हिअए सुहअ णिहित्तो ण रत्तोऽसि ॥ ९३ ॥

( धवलोसि यद्यपि सुन्दर तथापि त्वया मम रञ्जितं हृदयम् ।
रागभृतेपि हृदये सुभग निहितो न रक्तोसि ॥ )

इति विरोधः। वास्तवे तु अनुरागपूर्णे हृदये स्थापितः, अर्थात् मया हृदयेनाऽनुचिन्तितोपि निष्ठुरस्त्वं न अनुरागं गतोसीति विरोधपरिहारः। त्वयि अहमनुरक्ता, परं त्वम् अनुरक्ताया ममाऽनुरागं दृष्ट्वापि अनुरोधवशतोपि, नानुरक्तोसि, इत्याशयः। 'भृते' इत्यनेन—उपरिपर्यन्तं रागेण पूर्णं मे हृदयमित्यतिशयो व्यज्यते। विनिहितः ( स्थापितः ) इत्यनेन—त्वं मया स्वेच्छया हृदये स्थापितोसीति प्राकृतिको हृदयाकर्षणजो मे राग इति सूच्यते। 'सुन्दर' 'सुभग' इत्यामन्त्रणाभ्यां सौन्दर्यमात्रमुग्धाहं प्रथमदर्शने एव त्वय्यनुरक्ताऽभूवम्। त्वं तु सौन्दर्यगर्वितो नाधुनाप्यनुरज्यसीति गूढ उपालम्भो व्यज्यते।

*कल्यं किल खरहृदयः प्रवत्स्यति प्रिय इति श्रुतं जनतः।
भगवति वर्द्धस्व निशे तथा यथा कल्यमेव नोदेति ॥९४॥

मम पीडानभिज्ञत्वात् निष्ठुरहृदयः प्रियः कल्यं प्रातः प्रवत्स्यति प्रस्थास्यते, इति जनात् श्रूयते। भगवति निशे ! तथा वर्द्धस्व यथा

---

कल्लं किल खरहिअओ पवसिइहि पिओत्ति सुणइ जणम्मि।
तह वड्ढ भअवइ णिसे जह से कल्लं विअ ण होइ ॥९४॥

( कल्यं किल खरहृदयः प्रवत्स्यति प्रिय इति श्रूयते जने।
तथा वर्द्धस्व भगवति निशे यथा तस्य कल्यमेव न भवति ॥ )

---

* हिन्दीभाषायामपि प्रसिद्धम्—

'सजन सकारे जांयगे नैन मरेंगे रोय।
विधना ऐसी रैनि कर भोर कबहु ना होय ॥'

कल्यमेव न उदेति न भवति। निशावृद्धया चेदं ध्वन्यते-यदहम् इमां निशामेव दृष्टवती, न दिनोदयं द्रक्ष्यामि, प्रियविरहे जीवितस्य स्वतो गामित्वात् इति। 'जनात् श्रुतम्' इत्यनेन—मम दुःखं भविष्यतीत्यनुमाय, स स्वयं प्रवासं नासूचयत्, अत एव जनेभ्यः श्रूयते। तथा च मद्दुःखं जानन्नपि निष्ठुरः स प्रवसतीति निगूढ उपालम्भो व्यज्यते। 'प्रत्यूषोऽहर्मुखं कल्यः' इत्यमरः।

स्फुरिते वामाक्षि त्वयि यद्येष्यति स प्रियोऽद्य तत्सुचिरम्।
संमील्य दक्षिणं तत्प्रेक्षिष्येऽहं त्वयैवैनम्॥ ९५॥

हे वामनेत्र! त्वयि स्फुरिते सति विदेशगतः स प्रियो यदि अद्य एष्यति, तत् तर्हि दक्षिणं तत् (नयनम्) निमील्य तदागमनसंवाददायकेन त्वयैव एतं प्रियं सुचिरं प्रेक्षिष्ये। अन्यकार्येषु कृतसमादरमपि दक्षिणं नयनं निमील्य कृतज्ञताबुद्धया त्वामेवैकं प्रियतमदर्शनेन कृतार्थयिष्यामीति भावः। स्त्रीणां वामाक्षिस्फुरणं शुभसूचकं भवतीति प्रसिद्धम्।

समसुखदुःखसमितयो रूढप्रेम्णोस्ततस्तु कालेन।
दम्पत्योर्म्रियते यो जीवति सोऽन्यो मृतो भवति॥ ९६॥

---

फुरिए वामच्छि तुए जइ एहिइ सो पिओ ज्ज ता सुइरम्।
संमीलिअ दाहिणअं तुइ अवि एइं पलोइस्सम्॥ ९५॥

(स्फुरिते वामाक्षि त्वयि यद्येष्यति स प्रियोद्य तत्सुचिरम्।
संमील्य दक्षिणं त्वयैवैतं प्रेक्षिष्ये॥)

समाभ्याम् उभयोः कृते साधारणतया सुखदुःखाभ्यां समितयोः एकीभूतयोः, सुखदुःखावस्थायाम् एकीभूय परिवार्द्धितयोरित्यर्थः । ततः क्रमेण गच्छता कालेन गूढप्रेम्णोः दृढप्रणययोः दम्पत्योर्मध्ये यः ( जाया पतिर्वा ) म्रियते स जीवति । अन्यः तादृशवियोगदुःखात् मृतो भवति विरहदुःखदग्धात् ईदृशजीवितान्मरणमेव वरमिति भावः ।

प्रचुरयुवासौ ग्रामो मधुमासो यौवनं पतिः स्थविरः ।
जीर्णसुरा स्वाधीना ह्यसती मा भवतु किं म्रियताम् ॥ ९७ ॥

प्रचुराः युवकाः यस्मिन्, ईदृशः असौ ग्रामः ( अस्ति ), प्रचुरतया कस्मात्कस्माद्वा शीलरक्षणं क्रियतामिति भावः । मधुमासः (अत्मुद्दीपनकारकः ), यौवनम् ( कामविकारमयम् ), स्थविरो वृद्धः । जीर्णसुरा प्राचीनमद्यम्, पुरातनं हि तद्भूरिमादकमित्याशयः । स्वाधीनेत्यनेन

---

समसोक्खदुक्खपरिवड्ढिआणँ कालेण रूढपेम्माणम् ।
मिहुणाणँ मरइ जं तं खु जिअइ इअरं मुअं होइ ॥ ९६ ॥

( समसौख्यदुःखपरिवार्द्धितयोः कालेन रूढप्रेम्णोः ।
मिथुनयोर्म्रियते यत्तत्खलु जीवति इतरन्मृतं भवति ॥ )

पउरजुवाणो गामो महुमासो जोअणं पई ठेरो ।
जुण्णसुरा साहीणा असई मा होउ किं मरउ ॥ ९७ ॥

( प्रचुरयुवा ग्रामो मधुमासो यौवनं पतिः स्थविरः ।
जीर्णसुरा स्वाधीना असती मा भवतु किं म्रियताम् ॥ )

यथेच्छापानस्य सौकर्यं सूचितम् । एकैकमपि शीलखण्डनसमर्थेष्वेषु सर्वेष्वेकत्र मिलितेषु चरित्रभ्रंशोऽस्या नाऽपराधायेत्यर्थः ।

बालक भवतोऽप्यधिकं मम जीवितमेव वल्लभं निजकम् ।
तत्त्वां विना न भवतीति तेन कुपितं प्रसादयामि त्वाम् ॥९८॥

हे बालक, प्रेमपरिणामाऽनभिज्ञ ! इत्यर्थः । भवतः अपि भवदपेक्षयापि मम निजं जीवनमेव मम प्रियम् । तत् जीवितं त्वां विना न भवति, इति कारणेन कुपितं त्वां प्रसादयामि । कुपितस्य तवाऽनुनयो मम जीवनरक्षार्थमेव क्रियते, न तवानुरोधरक्षणार्थमित्याशयः । त्वां विनाहं जीवितुमेव न शक्नोमीति व्यङ्ग्यम् । तथा च– ' त्वयि निबद्ध-प्राणाया मम कीदृशः प्रेमबन्धः, त्वं तु तमपि यथावन्न वेत्सि ' इति बालकपदसहकारेण प्रियं प्रत्युपालभ्यते ।

एकैकवृतिवेष्टनविवरान्तरदत्ततरललोचनया ।
व्युत्क्रामति बाल त्वयि पञ्जरशकुनायितं हि तया ॥९९॥

---

बालअ तुमाहि अहिअं णिअअं विअ वल्लहं महं जीअम् ।
तं तइ विणा ण होइ त्ति तेण कुविअं पसाएमि ॥ ९८ ॥

( बालक त्वत्तोऽधिकं निजकमेव वल्लभं मम जीवितम् ।
तत्त्वया विना न भवतीति तेन कुपितं प्रसादयामि ॥ )

एक्केकमवइवेठणविवरन्तरदिण्णतरलणअणाए ।
तइ वोलन्ते बालअ पञ्जरसउणाइअं तीए ॥ ९९ ॥

( एकैकवृतिवेष्टनविवरान्तरदत्ततरलनयनया ।
त्वयि व्यतिक्रान्ते बालक पञ्जरशकुनायितं तया ॥ )

हे बाल अवसरे दृष्टिक्षेपानभिज्ञत्वाद्बालकसदृश ! त्वयि व्युत्कामति सति, तामतिक्रम्य त्वयि आगच्छति सति । एकैकस्मिन् वृतिवेष्टनस्य काष्ठनिर्मितगृहप्राचीरस्य 'कठघरा' विवरान्तरे दत्तं प्रहितं चञ्चलं नयनं यया, एतादृश्या तया, पञ्जरबद्धपक्षिवत् आचरितम् । पञ्जरबद्धः पक्षी यथा प्रतिविवरे प्रहितदृष्टिर्भ्रमति तथा त्वद्दर्शनलालसा सा वृतिवेष्टनसविधे बभ्रामेति भावः । एकैकस्मिन्नित्यनेन कदाचिदस्मिन् विवरान्तरे दर्शनसौकर्यं स्यादिति लोभेन प्रत्येकच्छिद्रान्तरतो दर्शनादुत्कण्ठातिशयो ध्वन्यते । 'प्रेषितलोचनया' इति वक्तव्ये दत्तपदेन नयनस्य दर्शने गाढसंसक्तत्वं लक्ष्यते । तथा च–प्रियदर्शने तस्या नयनं परवशमित्युत्कण्ठातिशयो ध्वन्यते । पक्षिदृष्टान्तेन—त्वद्दर्शनादुत्कण्ठिता सा पक्षीवोड्डीय त्वदन्तिकमागन्तुं वाञ्छति, परं पञ्जरबन्धे यथा पक्षिणः पारवश्यं तथा गृहबन्धनेन तस्याः, इति नायिकायाः प्रेमातिशयोऽभिव्यज्यते ।

तस्या अङ्गे प्रथमं यत्रैव हि यस्य निपतिता दृष्टिः ।
तत्रैव तस्य मग्ना, सर्वाङ्गं किल न केनचिद्दृष्टम् ॥१००॥

तस्या नायिकायाः यस्मिन्नेव अङ्गे यस्य दृष्टिः निपतिता, तस्य दृष्टिः तत्रैव तस्मिन्नङ्गे एव मग्ना, सौन्दर्यदर्शनार्थं सुस्थिराऽभवत् ।

---

जस्स जहं विअ पढमं तिस्सा अङ्गम्मि णिवडिआ दिट्ठी ।
तस्स तहं चेअ ठिआ सव्वङ्गं केण वि ण दिट्ठम् ॥ १०० ॥

( यस्य यत्रैव प्रथमं तस्या अङ्गे निपतिता दृष्टिः ।
तस्य तत्रैव स्थिता सर्वाङ्गं केनापि न दृष्टम् ॥ )

अत एव तस्याः सर्वाङ्गं केनचिदपि न दृष्टम् । ' विनिहिता ' स्थाने ' निपतिता ' इति कथनेन यदृच्छयापि गता दृष्टिर्निबध्यते, किं पुनरभिलाषपुरस्सरम्, तथा चाङ्गानां लावण्यातिशयो व्यज्यते । ' मग्ना ' इति पदेन सौन्दर्यविवशतया दृष्टेरचलत्वं लक्ष्यते, तथाच लावण्यसिन्धुरिव सा सौन्दर्येण अगाधेति ध्वन्यते । तथा च-सेयमस्माकं दृष्टिरेकैकाङ्गशोभादर्शने एव निश्चलनिलीना, ततो नेयं सर्वाङ्गशोभादर्शनसमर्थेत्याशयः । एवं च अनिर्वचनीयं तस्या लावण्यमिति ध्वनितम् ।

'प्रवासे कथमिव व्यत्येति स्म रजनिः' प्रियया पृष्टः कश्चित्प्रवासादागतः प्राह

चन्द्रमुखि चन्द्रधवला दीर्घा दीर्घाक्षि तव विरहे ।
कथमपि गमिता रजनी शतयामेव हि चतुर्यामा ॥१०१॥

हे चन्द्रमुखि हे दीर्घाक्षि ! तव विरहे चतुर्यामापि ( चतुःप्रहरापि ) शतयामेव दीर्घा चन्द्रधवला रजनी कथमपि गमिता । चन्द्रमुखीति संबोधनेन-चन्द्रेणावदातायां रात्रौ चन्द्रमालोक्य त्वन्मुखं स्मृतम्, इति विरहे शतगुणितवेदनाधिक्यं ध्वन्यते । दीर्घेति कथितेऽपि पुनः ' चतुर्यामा यामिनी शतयामेव गमिता ' इत्यनेन ' अधिकाधिकं रात्रेश्चत्वारः प्रहरा भवन्ति, परमद्य किं शतं प्रहरा जाताः ? ' इत्यविनिर्द्

---

चन्दमुहि चन्दधवला दीहा दीहच्छि तुह विओअम्मि ।
चउजामा सअजाम व्व जामिणी कहँ बोलीणा ॥ ३०१॥

( चन्द्रमुखि चन्द्रधवला दीर्घा दीर्घाक्षि तव वियोगे ।
चतुर्यामा शतयामेव यामिनी कथमप्यतिक्रान्ता ॥ )

रात्रिसमाप्तिप्रतीक्षया नायकस्य वेदनातिशयो ध्वन्यते। कथमपीत्यनेन अनिर्वचनीयः कष्टातिशयो द्योत्यते। अतिक्रान्तेति वक्तव्ये ( गमिता, इति ण्यन्तप्रयोगेण–'वैरिणी रात्रिः किं स्वेच्छया गता? बलान्मया कथंचिद् गमिता' इति विरहिणः असहनतातिशयो व्यज्यते।

नववनिताऽऽसक्तं स्वामिनं तत्प्रणयवञ्चिता पूर्वसुभगा प्रश्नस्योत्तरे प्राह–

**समसुह्यसे दयितया तथापि कृशितासि किमिति रे भणसि।**
**अनभिज्ञोपरिभरतो मुञ्चति बलदोऽपि चाङ्गानि॥ १०२॥**

दयितया सह उह्यसे उरसि धार्यसे, तथापि 'किमिति कृशिता कृशेव जाताऽसि' इति रे भणसि? पीडितचित्ततया प्रणयधाष्टर्येन 'रे' इति प्रयुक्तमिति बोध्यम्। हे अनभिज्ञ! उपरिभरतः उपरिनिहित-भारवशात् बलीवर्दोपि अङ्गानि मुञ्चति, सोऽप्यङ्गैः क्षीयते इत्यर्थः। 'अपि' पदेन बलीवर्दस्यापीय दशा, तदा अबलाया मम किं वाच्यमिति सूच्यते।' सपत्न्याः कृते 'दयिता' पदप्रयोगस्तु–'अधुना नवागता सैव ते प्रेयसी' इत्युपालम्भं सूचयति। अथवा—संप्रति सा तव दयि-ताऽस्ति, ततश्च त्वदधीनप्राणाया ममापि सा त्वत्प्रणयबहुमानेन बहुमता जातेति स्वप्रणयातिशयो ध्वन्यते। 'तया समं धार्यसे' इत्युक्त्या–'त्वद्-गतचित्ताया मम हृदयात्तवाऽपसरणमसंभवमेव। त्वं चैषु दिनेषु नवीनया

---

उज्झसि पिआइ समअं तह वि हु रे भणसि कीस किसिअ त्ति।
उवरिभरेण अ अण्णुअ मुअइ बइल्लो वि अङ्गाइं॥१०२॥

( उह्यसे प्रियया समं तथापि खलु रे भणसि किमिति कृशेति।
उपरि ( भरेण ) च हे अज्ञ मुञ्चति बलीवर्दोप्यङ्गानि॥ )

तया प्रियया विना क्षणमपि न तिष्ठसि, अतएव त्वन्मूर्त्या सह सापि मम हृदये प्रतिक्षणमुदयति ' इति साकूतमुपालभ्यते । तथापि भणसीत्यनेन मयि प्रणयभङ्गं कृतवतस्तव 'कथमियं कृशा' इति विचारणमप्यनुचितम् तथापि त्वं मुखेन प्रत्यक्षं मां कथयसि, अहो ते नैर्घृण्यम् ' इत्युपालम्भो व्यज्यते ।

अनुनयपरितोषितया तवाऽपराधांश्चिरेण गणयन्त्या ।
अप्रभवत्करयुग्माङ्गुल्या च तया चिरं रुदितम् ॥ १०३ ॥

मत्कृतेन अनुनयेन प्रसादितया, ततश्च तवाऽपराधान् चिरपर्यन्तं गणयन्त्या । अनेन अपराधानां बहुत्वं व्यज्यते । गणनावसरे अपराधानां बहुत्वात्, अप्रभवन्त्यः ( गणनां कर्तुमशक्नुवत्यः ) करयुग्मस्य द्वयोः करयोः अङ्गुल्यो यस्यास्तया । ' इयतः अपराधान् कथं गणयामि ' इत्याकुलया तया बहुकालं यावत् रुदितम् । अनेन नायिकाया मौग्ध्यं द्योत्यते । मुग्धां कलहान्तरितामनुनीयाऽऽगतायाः सख्याः नायकं प्रत्युक्तिः ।

वहति वधूर्नवयौवनमनोहराणि हि यथा यथाङ्गानि ।
कृशति नु तथा तथाऽस्या मध्यो दयितः सपत्नश्च ॥१०४॥

---

अणुणअपसाइआए तुज्झ वराहे चिरं गणन्तीए ।
अपहुत्तोहअहत्थङ्गुरीअ तीए चिरं रुएणम् ॥ १०३ ॥

( अनुनयप्रसादितया तवापराधांश्चिरं गणयन्त्या ।
अप्रभूतोभयहस्ताङ्गुल्या तया चिरं रुदितम् ॥ )

वधूः नवयौवनेन मनोहराणि अङ्गानि यथा यथा येन क्रमेण इति । तथा तथा मध्यः कटिः, दयितः, सपत्नः प्रतिपक्षः (सपत्नी-भृतिः), कृशति कृशो भवति । आचारार्थे क्विप् । यौवनस्वभावान्मध्यः, त्यासक्त्या दयितः, ईर्ष्यासंतापाच्च सपत्नीप्रभृतिः कृशो भवतीति ावः ।

आदाय चूर्णमुष्टिं हर्षौत्सुक्येन वेपमानायाः ।
प्रियमवकिरामि पुर इति हस्ते गन्धोदकं जातम् ॥१०५॥

पुरः प्रियतमम् अवकिरामि, 'प्रियतमस्योपरि इमां चूर्णमुष्टिं क्षिपामि' इति विचारेण मुष्टौ कर्पूरादिगन्धद्रव्यकृतां वर्णधूलिम् गुलाल' आदाय । हर्षजनितेन औत्सुक्येन वेपमानायाः कम्पमानायाः ायिकाया हस्ते गन्धोदकं गन्धयुक्तं रङ्गजलं जातमित्यर्थः । प्रियतम-र्शनजनितेन सात्त्विकभावात्मकेन स्वेदेन चूर्णमुष्टिरेव गन्धोदकं जात-

---

जह जह उव्वहइ वहू णवजोव्वणमणहराइँ अङ्गाइं ।
तह तह से तणुआअइ मज्झो दइओ अ पडिवक्खो ॥१०४॥

(यथा यथोद्वहति वधूर्नवयौवनमनोहराण्यङ्गानि ।
तथा तथा तस्यास्तनूयते मध्यो दयितश्च प्रतिपक्षः ॥)

घेत्तूण चुण्णमुट्ठिं हरिसूससिआएँ वेपमाणाए ।
भिसिणोमित्ति पिअअमं हत्थे गन्धोदअं जाअम् ॥ १०५ ॥

(गृहीत्वा चूर्णमुष्टिं हर्षोत्सुकिताया वेपमानायाः ।
अवकिरामीति प्रियतमं हस्ते गन्धोदकं जातम् ॥ )

मित्याशयः। कान्तावलोकनमात्रेण तस्या एतावान् भावोदय इति कान्तं प्रत्यनुरागातिशयो व्यज्यते। 'औत्सुक्येन' इति पदेन चूर्णमुष्टिप्रक्षेपे कालविलम्बाऽसहत्वं द्योत्यते। अत एव चूर्णमुष्टिग्रहणोत्तरं 'कदा प्रियमवकिरामि' इत्युत्कण्ठया स्वेदोद्गमरूपोऽनुभावोऽभिव्यञ्जितः।

दयितं प्रति मानावलम्बनं शिक्षयन्तीं सखीं प्रति सानुरागा काचिदाह–

स्थगयिष्यामि कराभ्यां नयने तस्मिन्विलोकिते द्वाभ्याम्।
अपिधास्यामि कथं मम पुलकितमङ्गं कदम्बकुसुममिव १०६

तस्मिन् दृष्टे सति द्वाभ्यां कराभ्यां नयने स्थगयिष्यामि आच्छादयिष्यामि, परं तद्दर्शनेन पुलकितं रोमाञ्चयुक्तम्, अत एव कदम्बकुसुममिव स्थितं ममाङ्गं कथम् अपिधास्यामि आच्छादयिष्यामि। सर्वाङ्गव्यापित्वात्पुलकं गोपयितुमशक्यमित्यर्थः। स्थगयिष्यामीत्यनेन–'यत्किल मत्प्रयत्नेन साधनीयं तद्धि ममाधीनम्, यत्तु मम हृदयाधीनं तत्राहमवशा, हृदयस्य प्रियतमवशीभूतत्वात्' इत्यभिव्यज्यते।

अनुरक्तायामपि वेषादिसौन्दर्याभावान्मन्दादरं प्रति दूती साकूतमाह—

भुङ्क्ष्व यदायत्तं नो लवणं कुग्रामरन्धने तु कुतः।
सुभग सलवणेनापि च किं तेन हि यत्र न स्नेहः ॥१०७॥

---

अच्छीइँ ता थइस्सं दोहिँ वि हत्थेहिँ वि तस्सिं दिट्ठे।
अङ्गं कलम्बकुसुमं व पुलइअं कहँ णु ढक्किस्सम् ॥ १०६ ॥

( अक्षिणी तावत्स्थगयिष्यामि द्वाभ्यामपि हस्ताभ्यां तस्मिन्दृष्टे।
अङ्गं कदम्बकुसुममिव पुलकितं कथं नु च्छादयिष्यामि ॥ )

हे सुभग यत् नः अस्माकम् अधीनं तद् भुङ्क्ष्व । सुलभलवणात्प्रदेशात्सुदूरवर्तिनः कुग्रामस्य रन्धने लवणं सामुद्र सैन्धवादि कुतः ? तेन सलवणेनापि ( भोज्येन ) किम्, यत्र स्नेहः घृतादिर्न स्यात् । अयं किल वाच्यार्थः । व्यङ्ग्यार्थस्तु—हे सुभग ! (त्वं सौभाग्यशाली असि, यत्त्वां दृष्ट्वैव सेयं स्निह्यतीत्याशयः) त्वया बाह्यलावण्यमात्रलोलुपतया अस्याः स्वाभाविकः स्नेहः (अनुरागः) नाऽवधीरणीयः । यतो ह्यस्मिन् कुग्रामे वेषादिकृतं सौन्दर्यं कथं स्यात् ? स्नेहहीनं केवलं लावण्यं च यत्र कुत्रचित्सुलभम् । अत एव धनव्ययादिना लभ्येन केवलेन लावण्येन को वा सहृदयस्य परितोषः ? 'आयत्तम्' इत्युक्त्या-सौन्दर्यं न कस्यचिदायत्तं, तद्धि दैवायत्तम् । यत्रास्याः स्ववशः सः किल बहुत्र दुर्लभ. स्नेहो भाग्यवशात्ते सुलभो जातः । तथा च सुभगतागर्वेण नासौ अस्या स्नेहो निराकरणीय इति साकूतं सूच्यते ।

संजीवनौषधीमिव सुतस्य रक्षत्यनन्यकर्मैव ।
श्वश्रूर्नवाऽभ्रदर्शनकण्ठागतजीवितां स्नुषामेताम् ॥१०८॥

---

भुञ्जसु जं साहीणं कुत्तो लोणं कुगामरिद्धम्मि ।
सुहअ सलोणेण वि किं तेण सिणेहो जहिं णत्थि ॥१०७॥
( भुङ्क्ष्व यत्स्वाधीन कुतो लवणं कुग्रामरन्धने ।
सुभग सलवणेनापि किं तेन स्नेहो यत्र नास्ति ॥ )

संजीवणोसहिम्मिव सुअस्स रक्खइ अणण्णवावारा ।
सासू णवब्भदंसणकण्ठागअजीविअं सोह्नम् ॥ १०८ ॥
( संजीवनौषधिमिव सुतस्य रक्षत्यनन्यव्यापारा ।
श्वश्रूर्नवाभ्रदर्शनकण्ठागतजीवितां स्नुषाम् ॥ )

नवाभ्राणां नवीनमेघानां दर्शनेन कण्ठागतजीविताम् एतां स्नुषाम् पुत्रवधूम् । सुतस्य निजपुत्रस्य पुनरुज्जीवनमहौषधिमिव अनन्यकर्मैव त्यक्ताऽन्यव्यापारा सती श्वश्रूः रक्षति । पुत्रो मे प्रवासं गतः । ततश्च विरहवेदनया मृतायामस्यां मम पुत्रोपि न भवेदित्याशङ्कया तां सतर्कमुपचरतीत्यर्थः । संजीवनौषधिमिवेत्यनेन पुत्रोऽस्यामेकान्ततो बद्धप्रणय इति अनुभवमार्मिकत्वं श्वश्र्वा द्योत्यते ।

**निवससि हृदयनिहितया हृदयेऽस्माकं स्वजायया साकम् ।**
**कथमन्यथा तया मे मनोरथाः सुभग विज्ञाताः ॥ १०९ ॥**

हे सुभग ! हृदयवर्तिन्या स्वप्रियया सह अस्माकं हृदये वससि । अन्यथा अर्थात् यदि एतन्न भवेत्तर्हि तया ( सपत्न्या ) मे मनोरथाः कथं ज्ञाताः ? मम हृदयगतमनोरथानां परिज्ञानात् अहमनुमिनोमि यन्मम हृदये त्वं स्वप्रियया सहैव निवससि, न एकाकीत्यर्थः । तथा च-अहं त्वामहर्निशं हृदयेनुचिन्तयामि । परं त्वं मां विहाय तस्यां सपत्न्यामनुरक्तः । अत एव गोपनीयमपि रहस्यं तस्याः प्रकाशयसीति गूढ उपालम्भोऽभिव्यज्यते । स्वजायेत्युक्त्या-सैव ते साम्प्रतं पत्नी, अहं तु स्त्रीसामान्यमिति ईर्ष्याभिव्यज्यते । सुभगेत्यामन्त्रणेन-'अहमन्यस्यामनुरक्तस्तथापि इयं मामेवानुध्यायति' इत्यात्मनः सौभाग्येनैवाऽवलिप्तोसि' इति गूढाक्षेपो व्यज्यते ।

---

णूएं हिअअणिहित्ताइ वससि जाआइ अह्म हिअअम्मि ।
अण्णह मणोरहा मे सुहअ कहं तीअ विण्णाआ ॥१०९॥

( नूनं हृदयनिहितया वससि जाययास्माकं हृदये ।
अन्यथा मनोरथा मे सुभग कथं तया विज्ञाताः ॥ )

व्याधिरिव वैद्यरहितो धनरहितः स्वजनमध्यवास इव ।
दर्शनमिव रिपुलक्ष्म्या दुःसहनीयस्तव वियोगः ॥ ११० ॥

वैद्यकृतेन उपचारेण रहितो व्याधिरिव, धनेन विना स्वजनानां मध्ये निवास इव, वैरिणो धनसमृद्धेर्दर्शनमिव, तव वियोगो दुःसहनीयः । प्रियं प्रति नायिकायाः संदेशगाथेयम् ।

विसृजामि तेन नाऽसून् मन्युभिरभिपूरिता सुभग येन ।
म्रियमाणा मा पुनरपि लप्स्ये त्वां त्वद्गतप्राणा ॥१११॥

मन्युभिः हृदयोपतापजातैः क्रोधैः पूरिता अहम् । तेन (कारणेन) असून् प्राणान् न विसृजामि न त्यजामि । येन त्वद्गतस्वान्ता त्वद्गतमना. सती म्रियमाणा अहं पुनरपि जन्मान्तरेपि त्वामेव मा लप्स्ये, न प्राप्स्यामि । तव दुश्चेष्टितैर्भृशमुपतप्य दुःखान्म्रियमाणाऽप्यहम्, मरण-समयेपि भवदनुध्यानं त्यक्तुं न समर्था, इत्येतावान्मे अनुरागः । त्वं

---

वाहि व्व वेज्जरहिओ धणरहिओ सुअणमज्झवासो व्व ।
रिउरिद्धिदंसणम्मिव दूसहणीओ तुह विओओ ॥ ११० ॥

( व्याधिरिव वैद्यरहितो धनरहितः स्वजनमध्यवास इव ।
रिपुऋद्धिदर्शनमिव दुःसहनीयस्तव वियोगः ॥ )

तेण ण मरामि मण्णूहिँ पूरिआ अज्ज जेण रे सुहअ ।
तोग्गअमणा मरन्ती मा तुज्झ पुणो वि लग्गिस्सम् ॥१११॥
( तेन न म्रिये मन्युभिः पूरिताऽद्य येन रे सुभग ।
त्वद्गतमना म्रियमाणा मा तव पुनरपि लगिष्यामि ॥ )

तु तथापि विप्रियकरणान्न विरमसि । अहो ते सुभगतागर्व इति 'सुभग' संबोधनोज्जृम्भित उपालम्भः प्रणयश्चाभिव्यज्यते । ' मन्युर्दैन्ये क्रतौ क्रुधि ' इत्यमरः ।

भरितोच्चरत्प्रविसृतप्रियसंस्मरणाभिसूचको बाष्पः ।
नयनस्थितो वराक्या दुःखपरीवाह इव वहति ॥ ११२ ॥

भरितः पूर्णः अत एव नयनमुत्क्रम्य उच्चरन् निर्गच्छन्, प्रविसृतः प्रवृद्धः तथा प्रियसंस्मरणस्याभिसूचकः । वराक्याः दीनायास्तस्या नयनस्थितो बाष्पः दुःखस्य प्रवाह इव वहति । दुःखप्रवाहोऽपि पूर्णत्वे सति आधारदेशमुल्लङ्घ्य गच्छन् प्रियस्मरणसूचकश्च भवति इति पूर्वार्द्धगतं विशेषणमुभयत्रापि संयुज्यते । नायमश्रुप्रवाहः किन्तु प्रवृद्धत्वाद्बहिर्निर्गच्छन् प्रियविरहजन्मा दुःखप्रवाहोऽयमित्यपह्नुतिरलङ्कारो व्यङ्ग्यः ।

निमिषमिव हि जागरितं रात्रेः प्रथमार्द्धमेष्यसि त्वमिति ।
संतापपरवशाया वर्षमिव व्यतिगतं शेषम् ॥ ११३ ॥

'त्वम् एष्यसि ( आगमिष्यसि ) ' इत्युत्साहेन । तया रात्रेः प्रथमार्द्धं निमिषमिव निमेष इव जागरितम् । 'रात्रेः प्रथमार्द्धम्' इति

---

भरिउच्चरन्तपसरिअपिअसंभरणपिसुणो वराईए ।
परिवाहो विअ दुक्खस्स वहइ णअणट्ठिओ वाहो ॥११२॥

( भरितोच्चरत्प्रसृतप्रियसंस्मरणपिशुनो वराक्याः ।
परीवाह इव दुःखस्य वहति नयनस्थितो बाष्पः ॥ )

अत्यन्तसंयोगे द्वितीया । अर्द्धरात्रे जातेपि तवाऽऽगमनोत्साहेन सा तं निमेषमिव परिगणय्य जागरितवतीति भावः। शेषम् अवशिष्टमर्द्धं संतप्तायास्तस्याः (नायिकायाः) वर्षमिव व्यतिक्रान्तम् । शेषः अस्यास्तीति अर्श आद्यच्, अन्यथा नपुंसकत्वं न स्यात् । तदिदं प्राकृतानुरोधेन, संस्कृते तु पुंस्त्वमेव साधु । तव समागमस्य भावनामात्रेण भूयानपि कालः सुखपूर्वकं व्यत्येति । वियोगे तु घटिका अपि वर्षायन्ते, इति नायकानुरागो ध्वन्यते ।

धन्यास्ता महिला या दयितं स्वप्नेपि वीक्षन्ते ।
तेन विना मम निद्रैव नैति का प्रेक्षते स्वप्नम् ॥११४॥

याः महिलाः स्वप्नेपि दयितं वीक्षन्ते ताः धन्याः । तेन (प्रियेण) विना मम निद्रैव न आगच्छति, तर्हि स्वप्नं का वीक्षते ? दयितदर्शनं विनैव स्वस्थानां यासां निद्रा आयाति, प्रियप्रणयरहितास्ता न धन्याः

---

एहिसि तुमं त्ति णिमिसं व जग्गिअं जामिणीअ पढमद्धम् ।
सेसं संतावपरव्वसाइ वरिसं व वोलीणम् ॥ ११३ ॥

( एष्यसि त्वमिति निमिषमिव जागरितं यामिन्याः प्रथमार्द्धम् ।
शेषं संतापपरवशाया वर्षमिव व्यतिक्रान्तम् ॥ )

धण्णा ता महिलाओ जा दइअं सिविणए वि पेच्छन्ति ।
णिद्द व्विअ तेण विणा ण एइ का पेच्छए सिविणम् ।

( धन्यास्ता महिला या दयितं स्वप्नेपि प्रेक्षन्ते ।
निद्रैव तेन विना नैति का प्रेक्षते स्वप्नम् ॥ )

इति स्तुतिव्याजेन निन्दाप्रदर्शनाद्व्याजस्तुतिर्वाच्योऽलङ्कारः । तेन च 'ता अधन्याः, प्रियप्रणयशालिनी अहं तु धन्या' इति व्यतिरेकालङ्कारो ध्वन्यते ।

**अन्यः कोपि निसर्गो मन्मथशिखिनो हला हताशस्य ।**
**निर्वाति नीरसानां हृदि सरसानां ज्वलति झटिति ॥११५॥**

हला ( हे ) सखि ! हताशस्य कामानलस्य कोऽपि अन्य एव साधारणस्य अग्नेरपेक्षया विलक्षण एव निसर्गः स्वभावः अस्तीत्यर्थः । यतः-नीरसानाम् अनुरागरहितानां हृदये निर्वाति प्रशान्तो भवति । सरसानाम् अनुरागिणां तु हृदये प्रज्वलितो भवति । साधारणः अग्निः नीरसे शुष्के ज्वलति, सरसे आर्द्रे निर्वाति, कामाग्नेस्तु तद्विपरीत एव स्वभाव इत्यर्थः । हताश इति विशेषणं कामाग्निं प्रतीर्ष्यासूचनार्थम् । 'हण्डे हञ्जे हलाह्वाने' इत्यमरः ।

विदग्धतागर्वशालिनी काचित्स्वानुगुणं कान्तमलभमाना सखीमाह—

**दृष्टोपि नयनसुखदः करसंस्पर्शेन निर्वृतिं जनयन् ।**
**न प्राप्यतेऽर्थितोऽपि हि दयितो विधुरिव कलानिलयः ११६**

---

अण्णो को वि सुहावो मम्महसिहिणो हला हआसस्स ।
विज्झाइ णीरसाणं हिअए सरसाणँ झत्ति पज्जलइ ॥११५॥

( अन्यः कोपि स्वभावो मन्मथशिखिनो हला हताशस्य ।
निर्वाति नीरसानां हृदये सरसानां झटिति प्रज्वलति ॥ )

दृष्टोऽपि ( दृश्यमानः अपि ) नयनयोः सुखकरः, कराणां किरणानां संस्पर्शेन निर्वृतिं शैत्यसुखं जनयन्, कलानां षोडशकलानां निलयः आश्रयः पूर्ण इत्यर्थः। एवंविधः विधुः चन्द्रः प्रार्थितोऽपि यथा पूर्णिमां विहाय सर्वदा न प्राप्यते। एवम्–दृष्टोऽपि नयनयोः सुखकरः। करयोर्हस्तयोः संस्पर्शेन निर्वृतिम् अलौकिकं सुखं जनयन्। कलानिलयः कलानां चतुःषष्टिकलानाम् आलयः आश्रयः। दयितः प्रियः प्रार्थितोऽपि सर्वदा न प्राप्यते, किन्तु अनुकूलभाग्य एव प्राप्यते। तथा च-परमविदग्धाया ममानुरूपः कान्तो दैवादेव लभ्यते, न वाञ्छामात्रेणेत्यात्मनो गुणशालितागर्वो ध्वन्यते।

अनवाप्तयौवनया सह रममाणं नायकं प्रति काचिद्विदग्धा मधुकरव्यपदेशेनाह—

ईषत्कोषविकासं यावन्नाप्नोति मालतीकलिका।
मकरन्दपानलोलुप मधुकर किं तावदेव मर्दयसि ॥११७॥

---

दीसन्तो णअणसुहो णिव्वुइजणओ करेहिँ वि छिवन्तो।
अब्भत्थिओ ण लब्भइ चन्दो व्व पिओ कलाणिलओ ॥११६॥

( दृश्यमानो नयनसुखो निर्वृतिजननः कराभ्याम् (अपि) स्पृशन्।
अभ्यर्थितो न लभ्यते चन्द्र इव प्रियः कलानिलयः ॥ )

जाव ण कोसविकासं पावइ ईसीस मालईकलिआ।
मअरन्दपाणलोहिल्ल भमर तावच्चिअ मलेसि ॥ ११७ ॥

( यावन्न कोषविकासं प्राप्नोतीषन्मालतीकलिका।
मकरन्दपानलोभयुक्त भ्रमर तावदेव मर्दयसि ॥ )

मालतीपुष्पस्य कलिका। कोषस्य कुड्मलस्य विकासम् उन्मीलनम्। यावत् ईषत् किञ्चिदपि न आप्नोति, मकरन्दस्य पुष्परसस्य पाने लोलुप हे मधुकर तावदेव ( एतस्मिन्नन्तराले एव ) ( एनाम् ) किं मर्दयसि किं दलयसि। अन्तःकोषस्य विकासे सत्येव कुसुमे रसोद्भवः स्यात्, एवं सत्यपि रसपाने अत्यन्तलालसत्वात् तावदेव तां कलिकां मर्दयसीत्यनुचितम्। यदि रसग्रहणे लालसा तर्हि तावत्प्रतीक्षणीयमिति भावः। अनेन वाच्यार्थेन—'अकुसुमिततया कलिकोपमा इयं नायिका यावत् कोषविकासं वराङ्गकुड्मलविकासं नाप्नोति रतिसुखलम्पटतया तावदेव किमेनां मर्दयसि। तथा चैवंविधामप्राप्तयौवनां कंचित्कालं परिहाय विदग्धवनितासु प्रवर्तितव्यमिति नायकं प्रति गूढमभिव्यज्यते। अस्या गाथाया अर्थमुपजीव्य विहारिणा निम्नलिखितं दोहापद्यं निर्मितमिति केचित्तुलयन्ति—

'नहि पराग नहि मधुर रस नहि विकास इहिं काल।
अली कलीही सों बँध्यो आगैं कौन हवाल॥'

*सन्ति मुखेऽन्यासामपि पक्ष्मलधवलानि दीर्घकृष्णानि।
नयनानि सुन्दरीणाम्, तदपि द्रष्टुं न जानन्ति ॥११८॥

---

अण्णाणँ वि होन्ति मुहे पह्मलधवलाइँ दीहकसणाइं।
णअणाइं सुन्दरीणं तह वि हु दट्ठुं ण आणन्ति ॥ ११८ ॥
( अन्यासामपि भवन्ति मुखे पक्ष्मलधवलानि दीर्घकृष्णानि।
नयनानि सुन्दरीणां तथापि द्रष्टुं न जानन्ति ॥ )

---

*एतच्छायोपजीवकं विहारिपद्यम्—
'अनियारे दीरघ दृगनि किती न तरुनि समान।
वह चितवनि औरै कछू, जिहिं बस होत सुजान॥'

( एतदतिरिक्तानाम् ) अन्यासामपि सुन्दरीणां मुखे सुन्दरपक्ष्म-(-नेत्ररोम-)-युक्तानि धवलानि दीर्घाणि कृष्णानि च नयनानि यद्यपि सन्ति तथापि तानि नयनानि दर्शनचातुर्यं न जानन्ति, इयमेव कटाक्षवीक्षणे प्रगल्भेत्याशयः । सहजा अपि नयनगुणा भ्रूविलासादिवैदग्ध्यं विना विफला इति भावः । किञ्च द्रष्टुं न जानन्तीत्यनेन—'अन्याः सुन्दर्यो दीर्घाभ्यामपि नयनाभ्यां न सम्यक् पश्यन्ति, या अगुणज्ञेष्वन्येषु जनेष्वनुरज्यन्ति । परं मत्प्रस्तुता सेयं नायिकैव द्रष्टुं जानाति, या भवन्तं सकृद् दृष्ट्वैव परिचितवती ।' इति नायिकायाः प्रेमोत्कर्षो व्यज्यते । नायिकाया गुणोत्कर्षं सूचयन्त्या दूत्या नायकं प्रत्युक्तिः ।

तव दर्शने सतृष्णा शब्दं श्रुत्वा विनिर्गता यानि ।
तानि पदानि हि जाता वोढव्या त्वयि विनिर्याते ॥११९॥

तव दर्शनार्थं सतृष्णा साभिलाषा सा तव शब्दं ( कण्ठरवम् ) श्रुत्वा यानि पदानि गृहाद्बहिः विनिर्गता । त्वयि विनिर्याते दर्शनपथातीते सति, तानि पदानि अन्यजनद्वारा वोढव्या उत्थापनीया जाता । त्वद्विरहान्नितान्तदुर्बला सा तव दर्शनोत्साहेन निजक्लेशमजानती कानिचित्पदानि बहिरायाता परं त्वामदृष्ट्वा भग्नाशा सा एतावन्निर्बला समभवद् यत्परावर्तनसमये अन्यैर्जनैर्वहनीयाभवदित्याशयः । तानि

---

तुह दंसणे सअह्णा सद्दं सोऊण णिग्गआ जाइं ।
तइ बोलीणे ताइं पआइँ वोढव्विआ जाआ ॥ ११९ ॥

( तव दर्शने सतृष्णा शब्दं श्रुत्वा निर्गता यानि ।
त्वयि व्यतिक्रान्ते तानि पदानि वोढव्या जाता ॥ )

पदानीत्यत्यन्तसंयोगे द्वितीया । अवलंबनीयेत्याद्यनुक्त्वा 'वोढव्या' इति कथनेन गतजीविता यथाऽन्यैर्जनैर्वहनीया भवति तथा जाता, ततश्च त्वं तस्या जीवितस्थानीय इति ध्वन्यते ।

हृदयानुकूलं दयितमप्राप्य विषीदन्तीं काञ्चिद् रहस्याभिज्ञा सखी आह—

किं रोदिषि किं शोचसि किं कुप्यसि सुतनु चैकैकम् ।
विषमिव विषमं प्रेम हि रोद्धुं शक्नोति कः कथय ॥१२०॥

एकैकं प्रत्येकजनं प्रति किं कुप्यसि । इच्छानुरूपं दयितमनवाप्य असफलप्रणया त्वं प्रेमवशाद्दुःखिता भवसीत्यस्माभिस्तवाऽकथनेपि परिज्ञातम् । तद्वृथा कोपं वा गोपनायासं वा मा कार्षीरिति भावः । 'सुतनु' इति संबोधनेन—'आत्मनः सौन्दर्यं वृथैव परिगणयन्ती त्वं सुभृशं परितप्यसे' इति द्योत्यते । रक्तेन सह सर्वाङ्गे संक्रान्तो विषवेगो दुर्निरोधतया यथा अचिकित्स्यो भवति तथा प्रियप्राप्तिमात्रप्रतीकार. प्रेमापि प्रायः अप्रतिरोध्य एव भवतीत्याशयः ।

पूर्वानुरागे लेखमुखेन नायिका नायकमाह—

यां यां पश्यामि दिशं तत्र लिखित इव विलोक्यसे पुरतः ।
प्रतिमापरिपाटीं तव सकलं वहतीव दिक्चक्रम् ॥ १२१ ॥

---

किं रुवसि किं अ सोअसि किं कुप्पसि सुअणु एक्कमेक्कस्स ।
पेम्मं विसं व विसमं साहसु को रुन्धिउं तरइ ॥ १२० ॥

( किं रोदिषि किं च शोचसि किं कुप्यसि सुतनु एकैकस्मै ।
प्रेम विषमिव विषमं कथय को रोद्धुं शक्नोति ॥ )

यां यां दिशं पश्यामि तत्र तत्र पुरः अग्रे लिखित इव दृश्यसे । सकलं दिशां मण्डलम् तव प्रतिमापरिपाटीं प्रतिबिम्बपरम्परां वहतीव । सर्वास्वेव दिशासु त्वत्प्रतिबिम्बं प्रतिफलितम् । अत एव सर्वतः त्वन्मूर्तिमेव विलोकयामीत्याशयः ।

**शुष्यत्येव च सरसाप्यवैति दुःखानि मुग्धहृदयापि ।**
**रक्तापि पाण्डुरैव हि जाता विरहे तव वराकी ॥ १२२ ॥**

सरसापि त्वत्प्रेमस्निग्धा साभिलाषापि परितापात् शुष्यति । त्वत्प्रेम्णा व्यामूढहृदयाऽपि विरहजानि दुःखानि अवैति जानाति । रक्तापि अनुरक्तापि सा वराकी विरहवेदनया पाण्डुवर्णा जाता । 'सरस' आदिपदानां श्लेषेण 'आर्द्र' त्वाद्यप्यर्थः । तथा च—आर्द्रायाः कथं शुष्कता ? व्यामूढस्य ( अचेतनस्य ) कथं दुःखपरिज्ञानम् । रक्तस्य ( अरुणवर्णस्य)

---

जं जं पुलएमि दिसं पुरओ लिहिअ व्व दीससे तत्तो ।
तुह पडिमापडिवाडिं वहइ व्व सअलं दिसाअक्कम् ॥ १२१ ।

( यां यां प्रलोकयामि दिशं पुरतो लिखित इव दृश्यसे तत्र ।
तव प्रतिमापरिपाटीं वहतीव सकलं दिशाचक्रम् ॥ )

सरसा वि सूसइ च्चिअ जाणइ दुक्खाइँ मुद्धहिअआ वि ।
रत्ता वि पाण्डुर च्चिअ जाआ वरई तुह विओए ॥ १२२ ॥

( रक्तापि शुष्यत्येव जानाति दुःखानि मुग्धहृदयापि ।
रक्तापि पाण्डुरैव जाता वराकी तव वियोगे ॥ )

कथं पाण्डुरतेति विरोधः । पूर्वोक्तप्रकारेण सरसादेः साभिलाषाद्यर्थकरणेन च परिहारः । तथा च– अनेन अलंकारेण 'त्वद्विरहे तस्याः सर्वमपि विपरीतं जातम्' इति वस्तु व्यज्यते ।

उन्नमतो नवमेघान् विमुक्तनिजजीविताशया दृष्ट्वा ।
पथिकगृहिण्या डिम्भो विरुदितमुख्या हि संदृष्टः ॥१२३॥

उन्नमतः शनैरुज्जृम्भमाणान् ( प्रवर्द्धमानान् ) नवमेघान् दृष्ट्वा विमुक्तनिजजीविताशया मुक्ता निजजीवनस्य आशा यया, एतादृश्या पथिकगृहिण्या । रुदन्मुख्या ( रुदत्या सत्या ) डिम्भः शिशुः दृष्टः । प्रावृषि विरहवेदनया मृतायां मयि, अल्पवयसोऽस्य का गतिः स्यात् ? इमं कः पालयेदिति चिन्तयेति भावः ।

दोषोऽयं महिलानां यद्धि प्रवसन्ति गर्विताः पुरुषाः ।
विरहान्तो न हि तावद्द्वित्रा यावन्म्रियन्ते नो ॥ १२४ ॥

---

दट्ठूण उण्णमन्ते मेहे आमुक्कजीविआसाए ।
पहिअघरिणीअ डिम्भो ओरुण्णमुहीअ सच्चविओ ॥१२३॥
( दृष्ट्वा उन्नमतो मेघानामुक्तजीविताशया ।
पथिकगृहिण्या डिम्भोऽवरुदितमुख्या दृष्टः ॥ )

महिलाणं चिअ दोसो जेण पवासम्मि गव्विआ पुरिसा ।
दोतिण्णि जाव ण मरन्ति ता ण विरहा समप्पन्ति ॥१२४॥
( महिलानामेव दोषो येन प्रवासे गर्विताः पुरुषाः ।
द्वे तिस्रो यावन्न म्रियन्ते तावन्न विरहाः समाप्यन्ते ॥ )

पुरुषपदं 'पुर अग्रगमने' इति धातोर्निष्पन्नम्। अत एव एतेषाम् अग्रगामिता-(नेतृता-)-गर्वं 'मन्यन्ते तस्मान्महिलाः' इति विनय-सहनशीलतादिगुणभाजनतया सहमानानां महिलानां ( स्त्रीणाम् ) एव अयं दोषः, यत् पुरुषाः स्त्रीणां विरहदुःखमपरिगणय्य प्रवासे गर्विताः सन्ति। यावत् द्वे तिस्रो वा प्रोषितपतिका न म्रियन्ते तावद्विरहसमाप्तिर्न भविष्यति। प्रियामरणं विलोक्यैव एते प्रवासं त्यक्ष्यन्तीति भावः।

एकैव हि रूपगुणं ग्रामणिदुहिता समुद्वहति।
अनिमिषनयनः सकलो यया हि देवीकृतो ग्रामः ॥१२५॥

एका सैव ग्रामनायकस्य तनया अलौकिकं रूपगुणम् ( सौन्दर्यगुणम् ) धारयति, यया ( दुहित्रा ) सकलोपि ग्रामः देवीकृतः, देवत्वं नीतः। देवाः अनिमिषनयनाः ( नेत्रयोर्निमेषरहिताः ) भवन्ति। रूपकौतुकवशीकृतचित्ततया सकलो ग्रामस्थोपि जनस्तां तथा पश्यति यथा न कस्यापि नयनयोर्निमेषोपि भवति। तथा च अनिमिषनयनतया देवत्वमिव प्राप्त इत्याशयः। न निमिषतीत्यनिमिषम्, अनिमिषं नयनं यस्य सः।

---

एक च्चिअ रूअगुणं गामणिधूआ समुव्वहइ।
अणिमिसणअणो सअलो जीए देवीकओ गामो ॥ १२५ ॥

( एकैव रूपगुणं ग्रामणीदुहिता समुद्वहति।
अनिमिषनयनः सकलो यया देवीकृतो ग्रामः ॥ )

उपालम्भपण्डिता काचिदखण्डिता ( रात्रौ सपत्नीष्वासक्तो यस्याः पतिः प्रातर्गृहमायाति ) चन्द्रव्यपदेशेन दयितमाह—

**अनुभूतः पूर्णदिने सकलकलापूर्ण तव करस्पर्शः ।**
**वन्दामहे द्वितीयासङ्गकृशाङ्गाधुना चरणौ ॥ १२६ ॥**

सकलाभिः षोडशकलाभिः पूर्ण ( अयि चन्द्र ) पूर्णदिने तवं कलाभिः पूर्ण पूर्णिमादिवसे मया तव कराणां किरणानां स्पर्शः अनुभूतः । द्वितीयासङ्गेन द्वितीयातिथेः सम्बन्धेन कृशाङ्ग कृशशरीर ! इदानीं चरणौ वन्दामहे, द्वितीयातिथौ वन्द्यतया त्वमधुना वन्दनीयचरणोसीत्यर्थः ।

व्यङ्ग्यविधया तु दयितमाह— चतुःषष्टिकलाभि. पूर्ण ! पूर्णदिने तव सङ्गसुखपूर्णे दिने । अथवा प्राकृते ' पुण्णदिअहम्मि ' इत्यस्य 'पुण्यदिवसे' इत्यर्थः । ततश्च मत्पुण्योदयदिने अथवा शोभने दिने तव करस्पर्शः हस्तस्पर्शोऽनुभूतः । इदानीं द्वितीयस्याः ( सपत्न्याः ) सङ्गेन कृशाङ्ग ! तव चरणौ वन्दामहे । इदानीं त्वं चरणयोः प्रणम्य एव, न तु समीपमुपगम्यः । दूरत एव नमस्करणीयोसीति भावः । कोपतः प्रत्याख्याने प्रसिद्धा किल चरणवन्दनोक्तिः । ' सकलकलापूर्ण ' इति सासूयोक्त्या—' त्वं सकलशाठ्य-( धूर्तत्व )-कलाभिः पूर्णोऽसि । एवं च भाग्यैरभिनन्दनीयेपि दिने पुण्येपि दिवसे तव करस्पर्श एव अस्मत्कृते भूरि भाग्यमभूत् । द्वितीयाभिः साकं तु तव सङ्गोपि भवति, यस्याधि-

---

अणुहुत्तो करफंसो सअलअलापुण्ण पुण्णदिअहम्मि ।
बीआसङ्गकिसङ्गअ एह्णिं तुअ वन्दिमो चलणे ॥ १२६ ॥
( अनुभूतः करस्पर्शः सकलकलापूर्ण पूर्णदिवसे ।
द्वितीयासङ्गकृशाङ्ग इदानीं तव वन्दामहे चरणौ ॥

क्येन कार्श्यमप्यभवत्। अहो धन्योसि!' इतीर्ष्या व्यज्यते। किञ्च-से किल कश्चन पुण्यो दिवस आसीद्यत्र ते करस्पर्शः (विवाहावसरे प्रथमप्रथमं पाणिग्रहः) मयानुभूतः। इदानीं अन्याम्बङ्कृशाङ्गत्वात्त्वत्तो दूरपरिस्थि। रेव समुचिता। एतेन-' पाणिगृहीतीमपि मां परिक्लेश्य अन्यासु शरी गेषयित्रीषु निर्भरं रमसे,' इत्याक्षेपो ध्वन्यते।

सैव सूर्यव्यपदेशेनाह—

प्रत्यूषागत रञ्जितदेह प्रियालोकलोचनानन्द।
सन्नखमण्डनक नमो दिवसपतेऽन्यत्र नीतरजनीक ॥१२७॥

प्रत्यूषे प्रातःकाले आगत द्वीपान्तरात् उपस्थित! रञ्जितदेह उदयसमये अरुणमण्डल। हे प्रियालोक! प्रियः आलोकः प्रकाशो यस्य तत्संबुद्धौ। लोचनानन्द! लोचनयोः आनन्दस्वरूप! हे सन्नखमण्डनक! सन्नं निजस्याऽभावे अवसन्नं शून्यं यत् खम् आकाशं तस्य मण्डनस्वरूप! नभोभूषणेत्यर्थः। अन्यत्र अन्यद्वीपे नीता, रजनी येन-ईदृश, हे दिवसपते (सूर्य) ते नमः।

उपरितः सूर्यनमस्कारं कुर्वत्यपि आकूतेन प्रियमुपालभते--प्रत्यूषे प्रातःकाले सपत्नीभवनात् आगत! रञ्जितदेह, सपत्नीसंक्रान्तेन अलक्तकादिना रक्तशरीर! प्रियालोकलोचनानन्द! प्रियालोकस्य (त्वत्प्रियस्य)

---

पच्चूसागअ रञ्जिअदेह पिआलोअलोअणाणन्द।
अण्णत्तखविअसव्वरि णहभूसण दिणवइ णमो दे॥१२७

(प्रत्यूषागत रञ्जितदेह प्रियालोक लोचनानन्द।
अन्यत्र क्षपितशर्वरीक नभोभूषण दिनपते नमस्ते॥)

सपत्नीजनस्य लोचनयोरानन्दकारक ! सन्नखमण्डनक ! सत् उत्तमं सपत्नीदत्तनखान्येव मण्डनं यस्य, सपत्नीदत्तनखक्षताद्यङ्कितेत्यर्थः। अन्यत्र अन्यस्या गृहे नीता रजनी येन। 'दिवसपते !' इत्यामन्त्रेण त्वं मे दिवसकालार्थमेव पतिरसि। रात्रौ तु सपत्नीषु पत्नीत्वं कलयसि (अर्थात् रात्रौ अन्यासां पतिर्भवसि) इति गूढ आक्षेपो व्यज्यते। तस्मात् ते नमः। दूरत एव तुभ्यं प्रणाम इत्यर्थः। 'पति' पदेनापि 'त्वं भोजनवस्त्राभ्यां मत्पालनमेव स्वकर्तव्यं मन्यसे' इत्याक्षेपः सूच्यते। एवं प्रणामेनापि 'प्रत्यहव्यलीकशतैरनुभूतभूरिवेदनाऽहं साम्प्रतं त्वत्तो दूरमेव स्थातुं वाञ्छामि, धन्यस्त्वम्' इति गूढोपालम्भोभिव्यज्यते। प्राकृते 'णहभूसण' इत्यस्य 'नखभूसण' 'नभ (भो) भूषण' इत्युभयमप्यर्थः संभवति। संस्कृते तु नेदं साध्यमिति 'सन्नखमण्डनक' इत्यापूरणीयमभवदिति किं वा रचनामार्मिकेषु निवेदनेन।

सपदि चतुर्थीमङ्गलभाविविरहभयविशेषलग्नाभ्याम्।
स्वेदाश्रुभी रुदितमिव वरस्य तस्याश्च हस्ताभ्याम् ॥१२८॥

सपदि शीघ्रम्। आगामिनि चतुर्थीमङ्गले (चतुर्थीहोमदिवसे) भाविनो विरहस्य भयात् विशेषतो लग्नाभ्यां संघटिताभ्याम्। वरस्य तस्याः (वध्वाः) च हस्ताभ्याम्। स्वेदाश्रुभिः स्वेदरूपाण्यश्रूणि विमुच्य

---

उअगअचउत्थिमङ्गलहोन्तविओअसविसेसलग्गेहिं।
तीअ वरस्स अ सेअंसुएहिँ रुण्णं व हत्थेहिं ॥ १२७ ॥

(उपगतचतुर्थीमङ्गलभविष्यद्वियोगसविशेषलग्नाभ्याम्।
तस्या वरस्य च स्वेदाश्रुभी रुदितमिव हस्ताभ्याम् ॥)

रुदितम् इव । विवाहे-चतुर्थीहोमं कृत्वा जामाता स्वगृहं गच्छति । ततश्च यावद्द्विरागमनं न भवति तावद् द्वयोः ( वरवध्वोः ) विरहो भवति । एवं च चतुर्थीदिने भाविनो विरहस्य भयेन परस्परसंलग्नाभ्यां वर-वधूहस्ताभ्यां स्वेदो न प्रकटितः, अपि तु दुःखात् रुदितमिवेत्याशयः । भये उपस्थिते जनः स्निग्धं जनं गाढमालिङ्गति । तथा चात्र वियोगभया-न्निबिडमाश्लिष्टयोः करयोः परस्परं स्नेहातिशयो ध्वन्यते । अयमाशयः-विवाहोयं पाणिपीडनमित्याख्यायते । ततश्च ' आवयोरेव ( करयोः ) मिथःसंयोगेन संजातनामधेयमिदं वैवाहिकसमागमसुखं अचिरादेव हन्त विरहदुःखे परिणतं भविष्यति ' इति लज्जाखेदयोः कारणात् ( अन्येषु अङ्गेषु तिष्ठत्स्वपि ) विवाहे प्रधानाभ्यां ' हसत इति हस्तौ ' इति परि-भाषिताभ्यामपि वरवधूहस्ताभ्यां रुदितमिव ।

' मम सुखानुकूलं नाचरसि ' इत्युपालभमानं प्रति काचित्साकूतमाह—

यद्यत्ते न हि सुखयति तत्तन्न करोमि यन्ममायत्तम् ।
सुखयामि यदहमेव न सुभग नु तत्किं ममायत्तम् ॥१२९॥

यत् यत् कार्यं ते न सुखयति सुखं नोत्पादयति, मम आयत्तम-धीनं तत्तत्कार्यं न करोमि । यदि तु अहमेव न सुखयामि, हे सुभग !

---

जं जं ते ण सुहाअइ तं तं ण करेमि जं ममाअत्तम् ।
अहअं चिअ जं ण सुहामि सुहअ तं किं ममाअत्तम् ।१२९।

( यद्यत्ते न सुखायते तत्तन्न करोमि यन्ममायत्तम् ।
अहमेव यन्न सुखाये सुभग तत्किं ममायत्तम् ॥ )

तर्कि नु ममाधीनम् ? अपि तु नेत्यर्थः । सुभगेत्यामन्त्रणेन ' अन्यनायिकाप्रीतिमुपलभ्य सौभाग्यगर्वितस्य ते संप्रति अहमेव चक्षुःशूलायिता' इत्युपालम्भो ध्वन्यते ।

परलोकव्यसनिजनो मातुलि यदि ताम्यतीह ताम्यतु सः ।
वदने दृष्टिर्वलते तदपि बलाद् ग्रामणीसूनोः ॥ १३० ॥

हे मातुलि ! परपुरुषनिरीक्षणेन परलोके दुर्गतिर्भवतीति परलोकपक्षपाती जनो यदि इह अस्मिन् ( दृष्टिनिक्षेपे ) ताम्यति दुःखमनुभवति तर्हि ताम्यतु । ग्रामनायकतनयस्य वदने दृष्टिर्बलात् वलते, अवरुध्यमानापि इतस्ततः परिभ्रम्य विवशा निपततीत्यर्थः । ' व्यसनि ' पदेन परस्परप्रीतिमजानताममीषां धार्मिकंमन्यानां सेयं रागान्धा आसक्तिरितीर्ष्या सूच्यते । तथा च–ग्रामणीतनये परलोकनिरपेक्षा प्रबला मे आसक्तिरिति ध्वन्यते ।

सूचीवेधे मुसलं निक्षिपता दग्धलोकेन ।
प्रिय एकग्रामेपि हि पूरितनयनं न दृष्टोपि ॥ १३१ ॥

---

जइ जूरइ जूरउ णाम मामि परलोअवसणिओ लोओ ।
तह वि बला गामणिणन्दणस्स वअणे वलइ दिट्ठी ॥१३०॥

( यदि खिद्यते खिद्यतां नाम मातुलानि परलोकव्यसनिको लोकः ।
तथापि बलाद् ग्रामणीनन्दनस्य वदने वलते दृष्टिः ॥ )

सूचीवेहे मुसलं विच्छहमाणेण डड्ढलोएण ।
एक्कग्गामे वि पिओ समअं अच्छीहिँ वि ण दिट्ठो ।१३१।

( सूचीवेधे मुसलं निक्षिपता दग्धलोकेन ।
एकग्रामेपि प्रियः समाभ्यामक्षिभ्यामपि न दृष्टः ॥ )

सूचीवेधस्य सूक्ष्मे स्थाने मुसलं निक्षिपता, अल्पमपि दूषणं बहूकुर्वतेत्यर्थः। दग्धेन लोकेन, अर्थात् अस्य लोकस्य कारणेन, हेतौ तृतीया। एकग्रामेपि वर्तमानः प्रियः पूरितनयनमपि यथा स्यात्तथा न दृष्टः, स्पष्टमुन्मीलिताभ्यां नयनाभ्यामातृप्ति न दृष्ट इत्यर्थः। दग्ध इति लोके प्रत्यसूयासूचनाय। 'सूचीवेधे' इति लोकोक्त्यलंकारः।

देवनार्चनकुसुमावचयमिषेण गोदावरीतीरे प्रणयिनीमभिसरन्तं काञ्चिदनुभविनी जरत्कुट्टनी सपरिहासमाह—

मा पुष्पलावक व्रज तुष्यन्त्युदकाञ्जलिभिरपि देवाः।
पुत्रक गोदावर्याः शीलोन्मूलानि कूलानि ॥ १३२ ॥

हे पुष्पावचयकारिन्! गोदावरीतीरे मा व्रज। देवाः सलिलाञ्जलिभिरपि प्रसन्ना भवन्ति। यतो हि गोदावर्याः कूलानि शीलं सच्चरितम् उन्मूलयन्ति मूलतः अपनयन्ति एवंभूतानि सन्ति। उन्मूलयतेः कर्मण्यण्। पुत्रकेति संबोधनेन—कुसुमावचयमिषेण यदर्थं त्वं गच्छसि तन्मया ज्ञातम्। किन्तु एवंविधैरेव कौतुकैः शुक्लीकृतकेशेष्वस्मादृशेषु सोयं ते मिषः स्थूल एवेति साकूतपरिहासमभिव्यज्यते।

---

मा वच्च पुप्फलाविर देवा उअअञ्जलीहिँ तूसन्ति।
गोआअरीअ पुत्तअ सीलुम्मूलाइँ कूलाइं ॥ १३२ ॥

( मा व्रज पुष्पलवनशील देवा उदकाञ्जलिभिस्तुष्यन्ति।
गोदावर्याः पुत्रक शीलोन्मूलानि कूलानि ॥ )



सन्ध्योपात्तजलाञ्जलिबिम्बितगौरीमुखाम्बुरुहम् ।
स्फुरिताधरं मुधैव हि विगलितमन्त्रं हरं नमत ॥१३३॥

सन्ध्योपासनार्थम् उपात्ते गृहीते जलाञ्जलौ प्रतिबिम्बितं ( प्रतिबिम्बरूपेण संक्रान्तम् ) गौरीमुखकमलं यस्य तम् । ततश्च प्रियामुखदर्शनात्संजातभावान्तरतया विगलितमन्त्र विगलितः विस्मृतः मन्त्रजपो यस्य तम् । तथापि तद्गोपनार्थं मुधैव स्फुरिताधरं अलीकमेव संचलदोष्ठपुटं हरं प्रणमत । सायंसन्ध्योपासनवर्णनेन ग्रन्थसमाप्तिः सूचिता गाथाकारेण, यथा प्रातःसन्ध्यावर्णनेन आरम्भः ।

देवर्ष्युपाह्वभट्टश्रीमथुरानाथशर्मसंग्रथितम् ।
गाथारत्नसमुच्चयमुरसि वहन्तो भजन्तु संतोषम् ॥१३४॥



---

संझागहिअजलञ्जलिपडिमासंकन्तगोरिमुहकमलम् ।
अलिअं चिअ फुरिओट्ठं विअलिअमन्तं हरं णमह ॥१३३॥

( सन्ध्यागृहीतजलाञ्जलिप्रतिमासंक्रान्तगौरीमुखकमलम् ।
अलीकमेव स्फुरितोष्ठं विगलितमन्त्रं हरं नमत ॥ )